परमेष्ठी प्रजापतिः । **सविता**=ईश्वरः, सूर्यश्च ॥ पूर्वार्द्धे स्वराड्ब्राह्मी पंक्तिश्छन्दः, उत्तरार्धे भुरिग्ब्राह्मी पंक्तिश्छन्दः । पंचत स्वरः ॥

**पुनरेतेन यज्ञेन किं किं सिध्यतीत्युपदिश्यते ॥**

फिर इस यज्ञ से क्या-क्या कार्य सिद्ध होता है इस विषय का उपदेश किया है ॥

**अपाररुं पृथिव्यै देवयजनाद्बध्यासं व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याᳪं शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् । अररो दिवं मा पप्तो द्रप्सस्ते द्यां मा स्कन व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याᳪं शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥२६॥**

**पदार्थः**—(**अप**) धात्वर्थे (**अररुम्**) असुरराक्षसस्वभावशत्रुम् । अर्त्तेररुः ॥ उ० ४ । ७९ ॥ अनेन ऋधातोररुः प्रत्ययः (**पृथिव्यै**) पृथिव्याम् । अत्र सुपां सुलुगिति सप्तमीस्थाने चतुर्थी (**देवयजनात्**) देवा यजन्ति यस्मिन् तस्मात् (**बध्यासम्**) हन्याम् (**व्रजम्**) व्रजन्ति=जानन्ति जना येन तं सत्संगम् (**गच्छ**) प्राप्नुहि गच्छतु वा (**गोष्ठानम्**) गौर्वाणी तिष्ठति यस्मिन्नध्ययनाध्यापने तं व्यवहारम् । गौरिति वाङ्नामसु पठितम् ॥ निघं० १ । ११ ॥ (**वर्षतु**) शब्दविद्याया वृष्टिं करोतु (**ते**) तव (**द्यौः**) विद्याप्रकाशः । दिवो द्योतनकर्मणामादित्यरश्मीनाम् ॥ निरु० १३ । २५ ॥ (**बधान**) बन्धय (**देव**) सर्वानन्दप्रदेश्वरव्यवहारहेतुर्वा (**सवितः**) सर्वेषु जीवेष्वन्तर्यामितया सत्यप्रेरकव्यवहारप्रेरणाहेतुर्वा (**परम्**) शत्रुभूतम् (**अस्याम्**) आधारभूतायाम् (**पृथिव्याम्**) बहुपदार्थप्रदायाम् (**शतेन**) बहुभिः (**पाशैः**) बन्धनैः (**यः**) मूर्खः (**अस्मान्**) विद्यारतप्रचारकान् (**द्वेष्टि**) अप्रीणाति (**यम्**) विद्याविरोधिनम् (**च**) पुनरर्थे (**वयम्**) विद्वांसः (**द्विष्मः**) अप्रीणीमः (**तम्**) पूर्वोक्तं विद्याशत्रुम् (**अतः**) अस्माद्बन्धनादुपदेशाद्वा (**मा**) निषेधार्थे (**मौक्**) त्यज (**अररो**) दुष्टमनुष्य (**दिवम्**) प्रकाशम् (**मा**) निषेधार्थे (**पप्तः**) पततु । अत्र लोडर्थे लुङ् (**द्रप्सः**) हर्षकारी रसः । दृप हर्षणमोहनयोरित्यस्मादौणादिकः सः प्रत्ययः । अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्, अ० ६ । १ । ५९ ॥ अनेनामागमः (**ते**) तव तस्याः पृथिव्या वा (**द्याम्**) आनन्दम् । दिवुधातोर्बाहुलकाड्डोप्रत्ययष्टिलोपे प्राप्ते वकारलोपश्च (**मा**) निषेधार्थे (**स्कन्**) निस्सारयतु । अत्र लोडर्थे लङ् । बहुलं छन्दसीति शपो लुक् (**व्रजम्**) व्रजन्ति विद्वांसो यस्मिन्सन्मार्गे तम् (**गच्छ**) गच्छतु गमय वा (**गोष्टानम्**) गौः पृथिवी तिष्ठति यस्मिन् तदन्तरिक्षम् (**वर्षतु**) सिंचतु (**ते**) तव (**द्यौः**) कान्तिः । द्यौर्वै सर्वेषां देवानामायतनम् ॥ श० १४ । ३ । २ । ८ ॥ (**बधान**) बध्नाति वा पक्षे व्यत्ययः (**देव**) विजयप्रदविजयहेतुर्वा (**सवितः**) सर्वोत्पादक व्यवहारोत्पत्तिहेतुर्वा (**परम्**) शत्रुम् (**अस्याम्**) सर्वबीजारोपणार्थायाम् (**पृथिव्याम्**) बहुप्रजायुक्तायाम् (**शतेन**) बहुभिः (**पाशैः**) सामदामदण्डभेदादिकर्मभिः (**यः**) न्याय विरोधी (**अस्मान्**) न्यायाधीशान् (**द्वेष्टि**) कोपयति (**यम्**) अन्यायकारिणम् (**च**) पुनरर्थे (**वयम्**) सर्वहितसंपादिनः (**द्विष्मः**) कोपयामः (**तम्**) अधर्मप्रियम् (**अतः**) शिक्षणात् (**मा**) निषेधे (**मौक्**) त्यजतु ॥ अयं मंत्रः श० १ । २ । ४ । १७—२१ व्याख्यातः ॥ २६ ॥

**प्रमाणार्थ**—(**अररुम्**) 'अररु' शब्द 'अर्त्तेररु' उणादि (४ । ७९) से 'ऋ' धातु से 'अरु' प्रत्यय करने पर सिद्ध होता है । (**पृथिव्यै**) पृथिव्याम् । यहां 'सुपां सुलुक्०' से सप्तमी के स्थान में चतुर्थी विभक्ति है । (**गोष्ठानम्**) 'गो' शब्द निघं० (१ । ११) में वाणी-नामों में पढ़ा है । (**द्यौः**) निरुक्त (१३ । २५) के अनुसार 'द्यौ' शब्द का अर्थ द्योतन करने वाली आदित्य की रश्मियां हैं । (**पप्तः**) पततु । यहां लोट्-अर्थ में लुङ् लकार है । (**द्रप्सः**) 'द्रप्स' शब्द हर्षण और मोहन अर्थ वाली 'दृप' धातु से औणादिक 'स' प्रत्यय करने से तथा 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' (अ० ६ । १ । ५९) से 'अम्' आगम करने से

परमेष्ठी प्रजापतिः । **सविता**=ईश्वरः, सूर्यश्च ॥ पूर्वार्द्धे स्वराड्ब्राह्मी पंक्तिश्छन्दः, उत्तरार्धे भुरिग्ब्राह्मी पंक्तिश्छन्दः । पंचत स्वरः ॥

**पुनरेतेन यज्ञेन किं किं सिध्यतीत्युपदिश्यते ॥**

फिर इस यज्ञ से क्या-क्या कार्य सिद्ध होता है इस विषय का उपदेश किया है ॥

**अपाररुं पृथिव्यै देवयजनाद्वध्यासं व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याᳬं शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् । अररो दिवं मा पप्तो द्रप्सस्ते द्यां मा स्कन् व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याᳬं शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥२६॥**

**पदार्थः**—(**अप**) धात्वर्थे (**अररुम्**) असुरराक्षसस्वभावशत्रुम् । **अर्त्तेररुः ॥ उ० ४ । ७९ ॥ अनेन ऋधातोररुः प्रत्ययः** (**पृथिव्यै**) पृथिव्याम् । **अत्र सुपां सुलुगिति सप्तमीस्थाने चतुर्थी** (**देवयजनात्**) देवा यजन्ति यस्मिन् तस्मात् (**वध्यासम्**) हन्याम् (**व्रजम्**) व्रजन्ति=जानन्ति जना येन तं सत्संगम् (**गच्छ**) प्राप्नुहि गच्छतु वा (**गोष्ठानम्**) गौर्वाणी तिष्ठति यस्मिन्नध्ययनाध्यापने तं व्यवहारम् । **गौरिति वाङ्नामसु पठितम् ॥ निघं० १ । ११ ॥** (**वर्षतु**) शब्दविद्याया वृष्टिं करोतु (**ते**) तव (**द्यौः**) विद्याप्रकाशः । **दिवो द्योतनकर्मणामादित्यरश्मीनाम् ॥ निरु० १३ । २५ ॥** (**बधान**) बन्धय (**देव**) सर्वानन्दप्रदेश्वरव्यवहारहेतुर्वा (**सवितः**) सर्वेषु जीवेष्वन्तर्यामितया सत्यप्रेरकव्यवहारप्रेरणाहेतुर्वा (**परम्**) शत्रुभूतम् (**अस्याम्**) आधारभूतायाम् (**पृथिव्याम्**) बहुपदार्थप्रदायाम् (**शतेन**) बहुभिः (**पाशैः**) बन्धनैः (**यः**) मूर्खः (**अस्मान्**) विद्यारतप्रचारकान् (**द्वेष्टि**) अप्रीणाति (**यम्**) विद्याविरोधिनम् (**च**) पुनरर्थे (**वयम्**) विद्वांसः (**द्विष्मः**) अपप्रीणीमः (**तम्**) पूर्वोक्तं विद्याशत्रुम् (**अतः**) अस्माद्बन्धनादुपदेशाद्वा (**मा**) निषेधार्थे (**मौक्**) त्यज (**अररो**) दुष्टमनुष्य (**दिवम्**) प्रकाशम् (**मा**) निषेधार्थे (**पप्तः**) पततु । **अत्र लोडर्थे लुङ्** (**द्रप्सः**) हर्षकारी रसः । **दृप हर्षणमोहनयोरित्यस्मादौणादिकः सः प्रत्ययः । अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्, अ० ६ । १ । ५९ ॥ अनेनामागमः** (**ते**) तव तस्याः पृथिव्या वा (**द्याम्**) आनन्दम् । **दिवुधातोर्बाहुलकाड्डोप्रत्ययष्टिलोपे प्राप्ते वकारलोपश्च** (**मा**) निषेधार्थे (**स्कन्**) निस्सारयतु । **अत्र लोडर्थे लङ् । बहुलं छन्दसीति शपो लुक्** (**व्रजम्**) व्रजन्ति विद्वांसो यस्मिन्सन्मार्गे तम् (**गच्छ**) गच्छतु गमय वा (**गोष्ठानम्**) गौः पृथिवी तिष्ठति यस्मिन् तदन्तरिक्षम् (**वर्षतु**) सिंचतु (**ते**) तव (**द्यौः**) कान्तिः । **द्यौर्वै सर्वेषां देवानामायतनम् ॥ श० १४ । ३ । २ । ८ ॥** (**बधान**) बध्नाति वा पक्षे व्यत्ययः (**देव**) विजयप्रदविजयहेतुर्वा (**सवितः**) सर्वोत्पादक व्यवहारोत्पत्तिहेतुर्वा (**परम्**) शत्रुम् (**अस्याम्**) सर्वबीजारोपणार्थायाम् (**पृथिव्याम्**) बहुप्रजायुक्तायाम् (**शतेन**) बहुभिः (**पाशैः**) सामदामदण्डभेदादिकर्मभिः (**यः**) न्याय विरोधी (**अस्मान्**) न्यायाधीशान् (**द्वेष्टि**) कोपयति (**यम्**) अन्यायकारिणम् (**च**) पुनरर्थे (**वयम्**) सर्वहितसंपादिनः (**द्विष्मः**) कोपयामः (**तम्**) अधर्मप्रियम् (**अतः**) शिक्षणात् (**मा**) निषेधे (**मौक्**) त्यजतु ॥ **अयं मंत्रः श० १ । २ । ४ । १७—२१ व्याख्यातः ॥ २६ ॥**

**प्रमाणार्थ**—(**अररुम्**) 'अररु' शब्द 'अर्त्तेररु' उणादि (४ । ७९) से 'ऋ' धातु से 'अरु' प्रत्यय करने पर सिद्ध होता है । (**पृथिव्यै**) पृथिव्याम् । यहां 'सुपां सुलुक्०' से सप्तमी के स्थान में चतुर्थी विभक्ति है । (**गोष्ठानम्**) 'गो' शब्द निघं० (१ । ११) में वाणी-नामों में पढ़ा है । (**द्यौः**) निरुक्त (१३ । २५) के अनुसार 'द्यौ' शब्द का अर्थ द्योतन करने वाली आदित्य की रश्मियाँ हैं । (**पप्तः**) पततु । यहां लोट्-अर्थ में लुङ् लकार है । (**द्रप्सः**) 'द्रप्स' शब्द हर्षण और मोहन अर्थ वाली 'दृप' धातु से औणादिक 'स' प्रत्यय करने से तथा 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' (अ० ६ । १ । ५९) से 'अम्' आगम करने से

सिद्ध होता है। (द्याम्) 'द्यौ' शब्द 'दिवु' धातु से बहुल करके 'डो' प्रत्यय तथा जड़ित होने से टिलोप की प्राप्ति थी किन्तु वकार का लोप हो जाने से सिद्ध होता है। (स्कन्) निस्सारयतु। यहां लोट्-अर्थ में लङ् लकार है। 'बहुलम् छन्दसि' से शप् का लुक् है। (द्यौः) शत० (१४।३।२।८) के अनुसार 'द्यौ' समस्त देवों का आयतन है। इस मन्त्र की व्याख्या शत० (१।२।४।१७-२१) में की गई है। १।२६॥

**सपदार्थान्वयः**—हे देव! सर्वानन्द-प्रदेश्वर! **सवितः**! सर्वेषु जीवेष्वन्तर्यामितया सत्य-प्रेरक! **भवत्कृपया वयं** विद्वांसः **परस्परं विद्यामेवो-पदिशामः**।

**भावार्थ**—हे (**देव**) सब आनन्दों के दाता (**सवितः**) सब जीवों में अन्तर्यामी होकर सत्य-प्रेरणा करने वाले ईश्वर! आपकी कृपा से (**वयम्**) हम विद्वान् लोग परस्पर विद्या का ही उपदेश करें।

**यथाऽयं सविता** व्यवहारोत्पत्तिहेतुः **देवः**= **सूर्य्यलोको** विजयहेतुः **अस्याम्** आधारभूतायां **पृथिव्यां** बहुपदार्थप्रदायां **शतेन** बहुभिः **पाशैः**= **बन्धनहेतुभिः किरणैराकर्षणेन पृथिव्यादीन् सर्वान् पदार्थान्** बध्नाति, **तथैव त्वमपि दुष्टान् बद्ध्वा शुभगुणान् प्रकाशय**।

जैसे यह (**सविता**) सब व्यवहारों की उत्पत्ति का कारण (**देवः**) विजय दिलाने वाला सूर्यलोक (**अस्याम्**) इस आधारभूत (**पृथिव्याम्**) नाना पदार्थ देने वाली पृथिवी पर (**शतेन**) अनेक (**परशैः**) बन्धन कारक किरणों के द्वारा आकर्षण से पृथिवी आदि सब पदार्थों को बांधता है वैसे ही आप **भी** दुष्टों को बाँध कर शुभ गुणों को प्रकाशित करो।

१. हे विद्वांसः! **यथाऽहं** [पृथिव्यै]=**पृथिव्यां** बहुपदार्थप्रदायां **देवयजनात्** देवा यजन्ति यस्मिन् तस्माद् **अररुम्** असुरराक्षसस्वभावशत्रुम **अपवध्यासं** हन्याम, तथैव तं पूर्वोक्तं विद्याशत्रुं **यूयमपि अपाघ्नत**।

१. हे विद्वान् पुरुषो! जैसे मैं [**पृथिव्यै**] नाना पदार्थ देने वाली इस पृथिवी पर (**देवयजनात्**) देवों की यज्ञशाला से (**अररुम्**) असुर तथा राक्षस स्वभाव वाले शत्रु को (**अपवध्यासम्**) दूर हटाता हूँ वैसे (**तम्**) उस पूर्वोक्त विद्या के शत्रु को (**अपघ्नत**) दूर हटाओ।

२. **यथाऽहं व्रजं** व्रजन्ति=जानन्ति जना येन तं सत्सङ्गं गच्छामि, तथैव **त्वमप्येतं गच्छ** प्राप्नुहि।

२. जैसे मैं (**व्रजम्**) ज्ञान प्राप्ति के साधन सत्सङ्ग में जाता हूँ वैसे तू भी इस सत्सङ्ग में (**गच्छ**) जा।

३. **यथाऽहं गोष्ठानं** गौर्वाणी तिष्ठति यस्मि-न्नध्ययनाऽध्यापने तं व्यवहारं **वर्षामि तथैव भवानपि वर्षतु** शब्दविद्याया वृष्टिं करोतु।

३. जैसे मैं (**गोष्ठानम्**) वाणी के निवास अध्ययन अध्यापन रूप व्यवहार की वर्षा करता हूँ वैसे आप भी (**वर्षतु**) शब्द विद्या की वर्षा करो।

४. यथा मम **द्यौः**=**विद्याप्रकाशः सर्वान् प्राप्नोति तथैव ते**=**तवापि प्राप्नोतु**।

४. जैसे मेरा (**द्यौः**) विद्या का प्रकाश सबको मिलता है वैसे (**ते**) तेरा भी विद्याप्रकाश सबको प्राप्त हो।

५. **यथाऽहं यो** मूर्खो **अस्मान्** विद्यारतप्रचार-कान् **द्वेष्टि** अप्रीणाति, **यं** विद्याविरोधिनं **च वयं** विद्वांसो **द्विष्मः** अप्रीणीमः, **तं** पूर्वोक्तं **परं** विद्या-शत्रुम् **अस्यां** अर्वबीजारोपणाऽर्थायां **पृथिव्यां** बहुप्र-जायुक्तायां **शतेन** बहुभिः **पाशैः** सामदामदण्डभेदादि-

५. जैसे मैं—(**यः**) जो मूर्ख (**अस्मान्**) विद्या में रत रहने वाले प्रचारकों से (**द्वेष्टि**) द्वेष करता है और (**यम्**) जिस विद्याविरोधी से (**वयम्**) हम विद्वान् लोग (**द्विष्मः**) अप्रीति रखते हैं (**तम्**) उस (**परम्**) विद्याशत्रु को (**अस्याम्**) इन सब बीजों के

कर्म्मभिः **नित्यं बध्नामि, कदाचित्तं** पूर्वोक्तं **न त्यजामि, तथैव हे वीर ! तं** पूर्वोक्तं शत्रुं **त्वमिमं बधान** बन्धय, **तं चातः** अस्माद्बन्धनादुपदेशाद्वा **कदाचित् मा न मौक्** त्यज ।

आरोपण स्थान (**पृथिव्याम्**) बहुत प्रजा से युक्त पृथिवी पर (**शतेन**) अनेक (**पाशैः**) साम, दाम, दण्ड, भेद आदि कर्मों से नित्य बाँधता हूँ, और (**तम्**) उसे कभी नहीं छोड़ता वैसे ही हे वीर ! (**तम्**) उस विद्या शत्रु को तू (**बधान**) बांध और उसे (**अतः**) इस बन्धन वा उपदेश से कभी (**मा मौक्**) मुक्त न कर।

**यो** मूर्खः **अस्मान्** विद्यारतप्रचारकान् **द्वेष्टि** अप्रीणाति, **यं** विद्याविरोधिनं **च वयं** विद्वांसो **द्विष्मः** अप्रीणामः तं पूर्वोक्तं विद्याशत्रुं **अतः**= **बन्धनाद्** अस्मादुपदेशाद्वा **कोऽपि मा मुञ्चतु**।= **एवं च** तं प्रति सर्व उपदिशन्तु—

(**यः**) जो मूर्ख (**अस्मान्**) विद्या में रत रहने वाले हम प्रचारकों से (**द्वेष्टि**) द्वेष करता है और (**यम्**) जिस विद्याविरोधी से (**वयम्**) हम विद्वान् लोग (**द्विष्मः**) अप्रीति रखते हैं (**तम्**) उस विद्या-को (**अतः**) इस बन्धन से वा उपदेश से कोई भी मुक्त न रखे। और इस प्रकार उसे सब उपदेश करें—

**हे अररो** ! दुष्टमनुष्य ! **त्वं दिवं** प्रकाशं **मा न पप्तः** पततु, **तथा ते**=तव तस्याः पृथिव्या वा **द्रप्सः** हर्षकारी रसो **द्याम्** आनन्दं **मा न स्कन्** निस्सा-रयतु ।

हे (**अररो**) दुष्ट मनुष्य ! तू (**दिवम्**) विद्या प्रकाश को (**मा पप्तः**) मत गिरा तथा (**ते**) तेरा अथवा इस पृथिवी का (**द्रप्सः**) हर्षकारक रस (**द्याम्**) आनन्द को (**मा स्कन्**) न निकलने दे।

**हे सन्मार्गजिज्ञासो ! यथाऽहं व्रजम्=सन्मार्गं** व्रजन्ति विद्वांसो यस्मिन्सन्मार्गंतं **गच्छामि, तथैव त्वमप्येतं गच्छ** गमय ।

हे सन्मार्ग के जिज्ञासु पुरुष ! जैसे मैं (**व्रजम्**) विद्वानों के चलने योग्य सन्मार्ग पर चलता हूँ वैसे तू भी इस पर चल तथा अन्यों को चला।

१. **यथेयं द्यौः** कान्तिः **गोष्ठानं** गौः पृथिवी तिष्ठति यस्मिंस्तदन्तरिक्षं **वर्षति, तथैवेश्वरो विद्वान् वा ते=तव कामान् वर्षतु** सिञ्चतु ।

१. जैसे यह (**द्यौः**) प्रकाश (**गोष्ठानम्**) पृथिवी के निवासस्थान आकाश को अपनी वर्षा से पूर्ण करता है वैसे ईश्वर वा विद्वान् (**ते**) तेरी काम-नाओं को (**वर्षतु**) पूर्ण करे।

२. **यथाऽयं सविता** व्यवहारोत्पत्तिहेतुः **देवः= सूर्य्यलोको** विजयहेतुः **अस्यां** सर्वबीजारोपणार्थायां **पृथिव्यां** बहुप्रजायुक्तायां **शतेन** बहुभिः **पाशैः= बन्धनहेतुभिः किरणैराकर्षणेन पृथिव्यादीन् सर्वान् पदार्थान् बध्नाति, तथैव त्वमपि च=पुनर्यो** न्याय-विरोधी **अस्मान्** न्यायाधीशान् **द्वेष्टि** कोपयति, **यम्** अन्यायकारिणं **च वयं** सर्वहितसम्पादिनो **द्विष्मः** कोपयामः, तम् अधर्मप्रियं **परम्=शत्रुं** शत्रुभूतम् **अस्याम्** आधारभूतायां **पृथिव्यां** बहुपदार्थप्रदायां **शतेन** बहुभिः **पाशैः** सामदामदण्डभेदादिकर्म्मभिः **बधान** बन्धय ।

२. जैसे यह (**सविता**) सब व्यवहारों की उत्पत्ति का कारण (**देवः**) विजय दिलाने वाला सूर्य लोक (**अस्याम्**) सब बीजों के आरोपण स्थान (**पृथिव्याम्**) बहुत प्रजा युक्त पृथिवी पर (**शतेन**) अनेक (**पाशैः**) बन्धन रूप किरणों के द्वारा आक-र्षण से पृथिवी आदि सब पदार्थों को बांधता है वैसे तू भी (**यः**) जो न्याय-विरोधी (**अस्मान्**) हम न्यायाधीशों से (**द्वेष्टि**) कोप करता है (**च**) और (**यम्**) जिस अन्यायकारी से (**वयम्**) सब के हित साधक हम लोग (**द्विष्मः**) कोप रखते हैं (**तम्**) उस अधर्मप्रेमी (**परम्**) शत्रु को (**अस्याम्**) इस

आधारभूत (**पृथिव्याम्**) बहुत पदार्थ देने वाली पृथिवी पर (**शतेन**) अनेक (**पाशैः**) साम, दाम, दण्ड, भेद आदि कर्मों से (**बधान**) बांध ।

३. **यथाऽहं तम्=द्वेष्टारं शत्रुं शतेन** बहुभिः **पाशैः** बन्धनैः **बद्ध्वा न कदाचिन्मुञ्चामि, तथैव त्वमप्येतं सदा बधान** बन्धय, **अतः** शिक्षणात् **कदाचिन्मा न मौक्** त्यजतु ॥ १ । २६ ॥

३. जैसे मैं (**तम्**) उस द्वेष करने वाले शत्रु को (**शतेन**) अनेक (**पाशैः**) बन्धनों से बांध कर कभी नहीं छोड़ता हूँ वैसे तू भी इसको सदा (**बधान**) बांध तथा उसे (**अतः**) शिक्षा से कभी (**मा मौक्**) मुक्त न कर ॥ १ । २६ ॥

[हे विद्वांसः ! यथाऽहं [पृथिव्यै]=पृथिव्यां देवयजनादररुमपवध्यासं तथैव तं यूयमप्यपाघ्नत]

**भावार्थः**--अत्र लुप्तोपमालङ्कारः ॥ ईश्वर आज्ञापयति—हे मनुष्याः! युष्माभिर्विद्वत्कार्यानुष्ठाने विघ्नकारिणो दुष्टाः प्राणिनः सदाऽपहन्तव्याः ।

**भावार्थ**—इस मन्त्र में लुप्तोपमा अलङ्कार है ॥ ईश्वर आज्ञा देता है कि हे मनुष्यो ! तुम लोग विद्वानों के कार्य में विघ्न करने वाले दुष्ट प्राणियों को सदा दूर हटाओ ।

[यथाऽहं व्रजं गच्छामि, तथैव त्वमप्येतं गच्छ, यथाऽहं गोष्ठानं वर्षामि तथा भवानपि वर्षतु]

सत्समागमेन विद्यावृद्धिर्नित्यं कार्या ।

श्रेष्ठ विद्वानों के संग से नित्य विद्या की वृद्धि करो ।

[योऽस्मान् द्वेष्टि यं च वयं द्विष्म स्तं परमस्यां पृथिव्यां शतेन पाशैर्नित्यं बध्नामि]

यथाऽनेकोपायैः श्रेष्ठानां हानिर्दुष्टानां च वृद्धिर्न स्यात् तथैवानुष्ठेयम् । सदा श्रेष्ठाः सत्कार्या दुष्टास्ताऽनीया बन्धनीयाश्च ।

जिस प्रकार से नाना उपायों से श्रेष्ठों की हानि और दुष्टों की वृद्धि न हो सके वैसा आचरण करो । सदा श्रेष्ठों का सत्कार और दुष्टों का ताड़न और बन्धन किया करो ।

[हे देव सवितः ! भवत्कृपया वयं परस्परं विद्याभिवोऽविशामः]

परस्परं प्रीत्या विद्याशरीरबलं सम्पाद्य क्रियया कलायन्त्रैरनेकानि यानानि रचयित्वा सर्वेभ्यः सुखं देयं, निरन्तरमीश्वरस्याज्ञापालनं (कार्यं) स एवोपासनीयश्चेति ॥ १ । २६ ॥

परस्पर प्रीति से विद्या और शरीर के बल को सिद्ध करके, क्रिया के द्वारा कला यन्त्रों से अनेक यानों की रचना कर सब को सुख प्रदान करो, सदा ईश्वर की आज्ञा का पालन और उसी की उपासना किया करो ॥ १ । २६ ॥

**भा० पदार्थ**--देवयजनात्=विद्वत्कार्यानुष्ठानात् । अररुम्=विघ्नकारिणं दुष्ट-प्राणिनम् । व्रजम्=सत्समागमम् । गोष्ठानम्=विद्यावृद्धिम् । शतेन=अनेकैः ।

**भाष्यसार**—१. **ईश्वर**—सब आनन्दों को देने वाला होने से ईश्वर का नाम 'देव' तथा सब जीवों में अन्तर्यामी रूप से सत्य का प्रेरक होने से 'सविता' है ।

२. **सूर्य**—सब व्यवहारों का उत्पादक होने से सूर्य का नाम भी 'सविता' तथा विजय प्रदाता होने से 'देव' है । यह पाश रूप किरणों के द्वारा आकर्षण शक्ति से पृथिवी आदि पदार्थों को बाँधता है ।

(क) **सूर्य के दृष्टान्त से शिक्षा**—(१) जैसे सूर्य इस पृथिवी के अन्धकार को नष्ट करता है वैसे राक्षस स्वभाव वाले विद्या के शत्रु दुष्ट लोगों का वध करो । (२) जैसे सूर्य व्रज=मेघ का संग

करता है ऐसे सज्जनों का संग करो। (३) जैसे सूर्य पृथिवी पर वर्षा का हेतु है इस प्रकार अध्ययन-अध्यापन व्यवहार में विद्या की वर्षा करो। (४) जैसे सूर्य का प्रकाश सब को प्राप्त होता है वैसे विद्या का प्रकाश शूद्रादि सब के लिए प्राप्त करो। (५) जैसे सूर्य प्रकाश के विरोधी अन्धकार को नष्ट कर देता है इसी प्रकार विद्या प्रचारक विद्वान् लोगों का जो मूर्ख जन विरोध करते हैं उन विद्या शत्रुओं को साम, दाम, दण्ड भेद आदि कर्मों से सदा वश में रखो। बन्धनमुक्त कभी न करो॥

(ख) इस मन्त्र में जैसे सूर्य के दृष्टान्त से शिक्षा ग्रहण करने का उल्लेख है इसी प्रकार विद्वानों से भी शिक्षा ग्रहण करने का उपदेश है। विद्वान् भी जनता के लिए सूर्य के समान अविद्या अन्धकार का नाश और विद्या का प्रकाश करने वाले हैं॥

●

परमेष्ठी प्रजापतिः। **यज्ञः=स्पष्टम्**॥ ब्राह्मीत्रिष्टुप्। धैवतः स्वरः॥

**केन स यज्ञो ग्राह्योऽनुष्ठातव्यश्चेत्युपदिश्यते॥**

उक्त यज्ञ का ग्रहण और अनुष्ठान किससे करना चाहिये, यह उपदेश किया है॥

**गायत्रेण॑ त्वा॒ छन्द॑सा॒ परि॑गृह्णामि॒ त्रैष्टु॑भेन त्वा॒ छन्द॑सा॒ परि॑गृह्णामि॒ जाग॑तेन त्वा॒ छन्द॑सा॒ परि॑गृह्णामि। सु॒क्ष्मा चासि॑ शि॒वा चासि॑ स्यो॒ना चा॑सि सु॒षदा॑ चा॒स्यूर्जस्वती॒ चासि॒ पय॑स्वती च॥२७**

**पदार्थः**—(**गायत्रेण**) गायत्र्येव गायत्रं तेन। छन्दसः प्रत्ययविधाने नपुंसकात् स्वार्थ उपसंख्यानम्॥ अ० ४।२।५५॥ अनेन गायत्रशब्दे अण् त्रैष्टुभादिषु अञ् च (**त्वा**) परमात्मानं तमिमं यज्ञं वा (**छन्दसा**) आह्लादकारिणा। चन्देरादेश्च छः॥ उ० ४।२२६॥ अनेनासुन् प्रत्ययः। (**परि**) सर्वतो भावे। परीति सर्वतो भावं प्राह॥ निरु० १।३॥ (**गृह्णामि**) संपादयामि (**त्रैष्टुभेन**) त्रिष्टुबेव त्रैष्टुभं तेन (**त्वा**) त्वां सर्वानन्दमयं तं पदार्थसमूहं वा (**छन्दसा**) स्वातंत्र्यानन्दप्रदेन (**परि**) अभितः (**गृह्णामि**) संपादयामि (**जागतेन**) जगत्येव जागतं तेन (**त्वा**) त्वां सुखस्वरूपं तमग्निं वा (**छन्दसा**) अत्यानन्दप्रकाशेन (**परि**) समन्तात् (**गृह्णामि**) स्वीकरोमि (**सुक्ष्मा**) शोभना चासौ क्ष्मेयं पृथिवी च सा। क्ष्मेति पृथिवीनामसु पठितम्॥ निघं १।१॥ (**च**) समुच्चयार्थे (**असि**) भवति। अत्र सर्वत्र पुरुषव्यत्ययः (**शिवा**) मंगलप्रदा (**च**) समुच्चये (**असि**) भवति (**स्योना**) सुखप्रदा। स्योनमिति सुखनामसु पठितम्॥ निघं० ३।६॥ (**च**) समुच्चये (**असि**) भवति (**सुषदा**) सुष्ठु सीदन्ति यस्यां सा (**च**) समुच्चये (**असि**) भवति (**ऊर्जस्वती**) अन्नवती। ऊर्गित्यन्ननामसु पठितम्॥ निघं० २।७। ऊर्बहुविधमन्नं यस्यां सेति भूम्नि मतुप्। ज्योत्स्नातमिस्रा०॥ अ० ५।२।११४॥ इति निपातितः (**च**) समुच्चये (**असि**) भवति (**पयस्वती**) पयः=प्रशस्तो रसो विद्यतेऽस्यां सा। अत्र प्रशंसार्थे मतुप पयस्वती रसवती॥ श० १।२।५।११॥ (**च**) समुच्चये॥ अयं मंत्रः श० १।२।५।१—११ व्याख्यातः॥ २७॥

**प्रमाणार्थ**—(**गायत्रेण**) यहां 'छन्दसः प्रत्यय विधाने नपुंसकात् स्वार्थ उपसंख्यानम्' (अ० ४।२।५५) से 'गायत्र' शब्द में 'अण्' और त्रैष्टुभ आदि में अञ् प्रत्यय है (**छन्दसा**) 'चन्देरादेश्च छः' उणादि (४।२२६) से 'चदि' धातु से 'असुन्' प्रत्यय और आदि वर्ण को छकार आदेश करने से 'छन्दः' शब्द सिद्ध होता है। (**परि**) निरुक्त (१।३) के अनुसार 'परि' शब्द समन्तात् (**चारों तरफ**) अर्थ को कहता है। (**सुक्ष्मा**) 'क्ष्मा' शब्द निघं (१।१) में पृथिवी-नामों में पढ़ा है। (**असि**) भवति। इस

मन्त्र में सर्वत्र 'असि' पद पर पुरुष व्यत्यय है। (**स्योना**) 'स्योन' शब्द निघं० (३ । ६) में सुखनामों में पढ़ा है। (**ऊर्जस्वती**) 'ऊर्क' शब्द निघं० (२ । ७) में अन्न-नामों में पढ़ा है। तथा 'ज्योत्स्नातमिस्रा०' (अ० ५ । २ । ११४) में मतुबन्त 'ऊर्जस्विन्' शब्द निपातित है। (**पयस्वती**) इस शब्द में प्रशंसा अर्थ में मतुप् प्रत्यय है। इस मन्त्र की व्याख्या शत० (१ । २ । ५ । १—११) में की गई है ॥ १ । २७ ॥

**सपदार्थान्वयः**—**येन यज्ञेन चोत्तमैः पदार्थैः सह सुक्ष्मा** शोभना चाऽसौ क्ष्मेयं पृथिवी च सा **असि**=भवति,=**येन च कल्याणकारिभिर्गुणैर्मनुष्यैश्चेयं शिवा** मङ्गलप्रदा **असि**=**भवति**,=**येन चाऽनुत्तमैः सुखैः सहेयं स्योना** सुखप्रदा **असि**=**भवति**,=**येन चोत्तमाभिः सुखकारिकाभिः स्थितिगतिभिः सहेयं सुषदा** सुष्ठु सीदन्ति यस्यां सा **असि**=**भवति**,=**येन चौत्तमैर्यवादिभिरन्नैः सहेयम् ऊर्जस्वती** अन्नवती=ऊर्गबहुविधमन्नं यस्यां सा **असि**=**भवति**,=**येन चोत्तमैर्मधुरादिरसवद्भिः फलैर्युक्तेयं पृथिवी पयस्वती** पयः=प्रशस्तो रसो विद्यतेऽस्यां सा रसवती **च जायते**।

**भाषार्थ**—जिस यज्ञ के कारण उत्तम पदार्थों से (**सुक्ष्मा**) यह पृथिवी शोभन (**सुन्दर**) (**असि**) होती है, जिस यज्ञ के कारण कल्याणकारी गुणों और मनुष्यों से यह (**शिवा**) मंगलकारी (**असि**) होती है, जिस यज्ञ के कारण अत्युत्तम सुखों से यह (**स्योना**) सुखदायक (**असि**) होती है, जिस यज्ञ के कारण उत्तम, सुखकारक स्थिति और गतियों से यह (**सुषदा**) अच्छी प्रकार **बैठने** योग्य (**असि**) होती है, जिस यज्ञ के कारण **उत्तम** यव आदि अन्नों से यह (**ऊर्जस्वती**) नाना प्रकार के अन्न से सम्पन्न (**असि**) होती है, और जिस यज्ञ के कारण उत्तम, मधुर आदि रसों वाले फलों से युक्त यह पृथिवी (**पयस्वती**) प्रशंसनीय रस वाली होती है।

**अहं यज्ञविद्याविन्मनुष्यो गायत्रेण** गायत्र्येव गायत्रं तेन **छन्दसा** आह्लादकारिणा **त्वा**=**तं यज्ञं** परमात्मानं तमिमं यज्ञं वा **परिगृह्णामि** सर्वतोभावेन सम्पादयामि।

यज्ञ विद्या का ज्ञाता मैं (**गायत्रेण छन्दसा**) आनन्दकारी गायत्री छन्द से (**त्वा**) उस यज्ञ को वा परमात्मा को (**परिगृह्णामि**) सब ओर से सिद्ध करता हूँ।

**अहं त्रैष्टुभेन** त्रिष्टुबेव त्रैष्टुभं तेन **छन्दसा** स्वातन्त्र्याऽऽनन्दप्रदेन **त्वा**=**तमिमं पदार्थसमूहं** त्वां सर्वानन्दमयं तं पदार्थसमूहं वा **परिगृह्णामि** अभितः सम्पादयामि।

मैं—(**त्रैष्टुभेनछन्दसा**) स्वतन्त्रता का आनन्द प्रदान करने वाले त्रिष्टुप् छन्द से (**त्वा**) उस सर्वानन्दमय पदार्थ समूह को (**परिगृह्णामि**) सब ओर से सिद्ध करता हूँ।

**अहं जागतेन** जगत्येव जागतं तेन **छन्दसा** अत्यानन्दप्रकाशेन **त्वा**=**तमिममग्निं** त्वां सुखस्वरूपं तमग्निं वा **परिगृह्णामि** समन्तात् स्वीकरोमि ॥ १ । २७ ॥

मैं—(**जागतेन छन्दसा**) अत्यन्त आनन्द को प्रकाशित करने वाले जगती छन्द से (**त्वा**) उस अग्नि क वा सुखस्वरूप परमात्मा को (**परिगृह्णामि**) सब ओर से स्वीकार करता हूँ ॥ १ । २७ ॥

[अहं गायत्रेण, त्रैष्टुभेन, जागतेन छन्दसा त्वा=**तमिमंयज्ञं, तमिमं पदार्थ समूहं, तमिमग्निं परिगृह्णामि**]

**भावार्थः**—वेदप्रकाशकेश्वरोऽस्मान् प्रत्यभिवदति—युष्माभिर्न चान्तरेण वेदमन्त्राणां पठनं, तदर्थज्ञानं, यज्ञानुष्ठानं, सुखफलं प्राप्तुं, सर्वशुभगुणाढ्याः सुखकारिणोऽन्नजलवाय्वादयः पदार्थाः

**भावार्थ**—वेदों का प्रकाश करने वाला ईश्वर हमें उपदेश देता है कि तुम लोग वेद मन्त्रों के पाठ, उनके अर्थ का ज्ञान और यज्ञानुष्ठान के बिना सुख रूप फल की प्राप्ति, तथा सब शुभ गुणों से

शुद्धाश्च कर्तुं शक्यन्ते ।

भरपूर सुखकारी अन्न, जल, वायु आदि पदार्थों की शुद्धि नहीं कर सकते ।

तस्मादेतस्य त्रिविधस्य यज्ञस्य सिद्धिं प्रयत्नेन निष्पाद्य सुखे स्थातव्यम् ।

इसलिये—इस तीन प्रकार के यज्ञ की सिद्धि को प्रयत्न से पूरा करके सुख में स्थित रहो ।

[येन च कल्याणकारिभिर्गुणैर्मनुष्यैश्चेयं शिवाऽसि=भवति]

ये चास्यां वायुजलौषधिदूषका दुर्गन्धादयो बु दोषा दुष्टाश्च मनुष्याः सन्ति ते सर्वदा निवारणीयाः ॥ १ । २७ ॥

और जो इस पृथिवी पर वायु, जल और ओषधियों को दूषित करने वाले दुर्गन्ध आदि दोष और दुष्ट मनुष्य हैं उनको सदा दूर हटाओ ॥ १ । २७ ॥

**भाष्यसार**—**१. यज्ञ से पृथिवी का शोधन**—यज्ञ से पृथिवी और इसके पदार्थ उत्तम हो जाते हैं जिससे यह सु+क्ष्मा (उत्तम-पृथिवी) कहलाती है । यज्ञ के कल्याणकारी गुणों और याज्ञिक लोगों से यह शिवा (मङ्गलकारी), अत्युत्तम सुखों से युक्त होने सुखदायक (स्योना), उत्तम सुखदायक स्थिति और गति से निवास योग्य (सुषदा), उत्तम यव आदि अन्नों के कारण अन्नवती (ऊर्जस्वती), उत्तम मधुरादि रसों से भरे फलों से युक्त होने से रसवती (पयस्वती) होती है ।

**२. यज्ञ**—गायत्री आदि छन्दों से मण्डित वेदमन्त्रों से यज्ञ का अनुष्ठान करें । यज्ञ आह्लादकारी, स्वतन्त्रता रूप आनन्द का देने वाला तथा अत्यन्तानन्द को प्रकाशित करने वाला है ।

**३. ईश्वर**—यज्ञ के समान ईश्वर भी आह्लादकारी, स्वतन्त्रता रूप आनन्द का देने वाला, सर्वानन्दमय, अत्यन्त आनन्द का प्रकाश करने वाला और सुखस्वरूप है ॥

परमेष्ठी प्रजापतिः । **यज्ञः=स्पष्टतम्** ॥ विराड् ब्राह्मी पंक्तिः । पंचमः ॥

**ते दोषाः कथं निवारणीयास्तत्र मनुष्यैः पुनः किं करणीयमित्युपदिश्यते ॥**

वे दोष कैसे निवारण करने और वहाँ मनुष्यों को फिर क्या करना चाहिये इस विषय का उपदेश किया है ॥

**पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम् । यामैरयँश्चन्द्रमसि स्वधाभिस्तामु धीरासोऽअनुदिश्य यजन्ते । प्रोक्षणीरासादय द्विषतो वधोऽसि ॥२८॥**

**पदार्थः**—(पुरा) पुरस्तात् (**क्रूरस्य**) कृन्तन्त्यंगानि यस्मिन् तस्य युद्धस्य । कृतेश्छः क्रू च ॥ उ० २ । २१ ॥ अनेन कृन्ततेरक् प्रत्ययः । क्रू इत्यादेश्च (**विसृपः**) योद्धृभिर्विविधं यत्सृप्यते तस्य । सृपितृदोः कसुन् ॥ अ० ३ । ४ । १७ ॥ अनेन भावार्थे सृपिधातोः कसुन् (**विरप्शिन्**) महागुणविशिष्टेश्वर वा महैश्वर्य्यमिच्छुक मनुष्य । विरप्शीति महन्नामसु पठितम् ॥ निघं० ३ । ३ ॥ (**उदादाय**) ऊर्ध्वं समन्ताद् गृहीत्वा (**पृथिवीम्**) विस्तृतप्रजायुक्ताम् (**जीवदानुम्**) या जीवेभ्यो जीवनार्थं वस्तु ददाति ताम् (**याम्**) पृथिवीम् (**ऐरयन्**) राज्याय प्राप्नुवन्ति । अत्र लडर्थे लङ् (**चन्द्रमसि**) चन्द्रलोकसमीप आह्लादे वा (**स्वधाभिः**) अन्नैः सह वर्तमानाम् । स्वधेत्यन्ननामसु पठितम् ॥ निघं० २ । ७ ॥ (**ताम्**) एतल्लक्षणाम् (**उ**) वितर्के (**धीरासः**) मेधाविनः । धीर इति मेधाविनामसु पठितम् ॥ निघं० । ३ । १५ ॥ (**अनुदिश्य**) प्राप्तुं शोधयितुमनुलक्ष्य (**यजन्ते**) पूजयन्ति=संगतिं कुर्वते (**प्रोक्षणीः**) प्रकृष्टतया सिञ्चन्ति याभिः क्रियाभिः पात्रैर्वा ताः (**आ**) समन्तात् (**सादय**) स्थापय (**द्विषतः**) शत्रोः (**वधः**) हननम् (**असि**) भवेत् । अत्रापि पुरुषव्यत्ययो लिङर्थे लट् च ॥ अयं मंत्रः श० १ । २ । ५ । १६—२६ व्याख्यातः ॥ २८ ॥

**प्रमाणार्थ**—(**क्रूरस्य**) 'क्रूर' शब्द 'कृतेश्छ: क्रू च' उणादि (२।२१) से 'कृति' धातु से 'रक्' प्रत्यय और 'क्रू' आदेश करने से सिद्ध होता है। (**विसृपः**) 'विसृपः' शब्द 'सृपितृदोः कसुन्' अ० (३।४।१७) से भावलक्षण अर्थ में 'सृप्' धातु से 'कसुन्' प्रत्यय करने से सिद्ध होता है। (**विरप्शिन्**) 'विरप्शी' शब्द निघं० (३।३) में महान्-नामों में पढ़ा है। (**ऐरयन्**) प्राप्नुवन्ति। यहाँ लट् अर्थ में लङ् लकार है। (**स्वधाभिः**) 'स्वधा' शब्द निघं० (२।७) में अन्न-नामों में पढ़ा है। (**धीरासः**) 'धीर' शब्द निघं० (३।१५) में मेधावी-नामों में पढ़ा है। (**असि**) भवेत्। यहाँ भी पुरुष-व्यत्यय और लिङ्-अर्थ में लट् लकार है। इस मन्त्र की व्याख्या शत० (१।२।५।१६—२६) में की गई है॥ १।२८॥

**सपदार्थान्वयः**—हे विरप्शिन् !=जगदीश्वर महागुणविशिष्टेश्वर **भवतैव या** पृथिवी **स्वधाभिः** अन्नैः सह वर्त्तमानो **युक्ता जीवदानुः** या जीवेभ्यो जीवनार्थं वस्तु ददाति तां **पृथिवी** विस्तृत-प्रजायुक्ता **उदादाय** ऊर्ध्वं समन्ताद् गृहीत्वा **चन्द्रमसि** चन्द्रलोकसमीपे **स्थापिता तस्माद् धीरासः** मेधाविनः **ताम्**=इमाम् एतल्लक्षणां **पृथिवीं** विस्तृतप्रजायुक्तां **प्राप्य भवन्तमनुदिश्य** प्राप्तुं=शोधयितुमनुलक्ष्य **सेनां शस्त्राण्युदादाय** ऊर्ध्वं समन्ताद् गृहीत्वा **विसृपः** योद्धृभिर्विविधं यत्सृप्यते तस्य **क्रूरस्य** कृन्तन्त्यङ्गानि यस्मिन् तस्य युद्धस्य **मध्ये शत्रून् जित्वा राज्यमैरयन्**=प्राप्नुवन्ति राज्याय प्राप्नुवन्ति।

**भाषार्थ**—हे (**विरप्शिन्**) महान् गुणों से युक्त जगदीश्वर ! आपने ही (**याम्**) जिस (**स्वधाभिः**) अन्नों से युक्त (**जीवदानुम्**) प्राणियों के जीवन के लिये वस्तुओं को देने वाली (**पृथिवीम्**) विस्तृत प्रजा से युक्त पृथिवी को (**उदादाय**) सब ओर से ग्रहण करके (**चन्द्रमसि**) चन्द्रलोक के समीप स्थापित किया है, इसलिये (**धीरासः**) मेधावी लोग (**ताम्**) इस उक्त लक्षणों वाली (**पृथिवीम्**) विस्तृत प्रजा से युक्त पृथिवी को प्राप्त करके आपको (**अनुदिश्य**) प्राप्त करने के लिये सेना एवं शस्त्रों को (**उदादाय**) सब ओर से ग्रहण करके (**विसृपः**) योद्धाओं की विविध चेष्टाओं के स्थल (**क्रूरस्य**) एवं शत्रुओं के अंगों को काटने वाले युद्ध में शत्रुओं को जीत कर राज्य को (**ऐरयन्**) प्राप्त करते हैं।

**यथा चैवं** कृत्वा **धीरासो** मेधाविनो [**यजन्ते**] पूजयन्ति=सङ्गतिं कुर्वते, **पुरा** पुरस्तात् (**प्रोक्षणीः**) प्रकृष्टतया सिञ्चन्ति याभिः क्रियाभिः पात्रैर्वा ताः **चासादितवन्तस्तथैव हे विरप्शिन्** ! महैश्वर्यमिच्छुक मनुष्य ! **त्वमपि उ**=**इति वितर्के** सवितर्कं **तां प्राप्येश्वरं यज, प्रोक्षणीः** प्रकृष्टतया सिञ्चन्ति याभिः क्रियाभिः पात्रैर्वा ताः **च असादय** समन्तात्स्थापय, **यथा च द्विषतः** शत्रोः **वधो** हननम् **असि**=**भवेत**, **तथा** कृत्वा [**चन्द्रमसि**] **आनन्दे** अह्लादे वा **नित्यं प्रवर्त्तस्व**॥ १।२८॥

और—जैसे इस प्रकार करके (**धीरासः**) मेधावी लोग [**यजन्ते**] पूजा एवं संगति करते हैं तथा (**पुरा**) पहले (**प्रोक्षणीः**) उत्तमरीति से सेचन करने वाली क्रियाओं वा पात्रों को प्राप्त करते हैं वैसे ही हे (**विरप्शिन्**) महान् ऐश्वर्य के इच्छुक मनुष्य ! तू भी (**उ**) विचारपूर्वक उस प्रोक्षणी को प्राप्त करके ईश्वर की पूजा एवं संग कर और (**प्रोक्षणीः**) उत्तम रीति से सेचन करने वाली क्रियाओं वा पात्रों को (**आसादय**) सब ओर स्थापित कर, और जिस प्रकार से (**द्विषतः**) शत्रु का (**वधः**) नाश (**असि**) हो वैसे उसका नाश करके सदा आनन्द में रह॥ १।२८॥

[हे विरप्शिन्=जगदीश्वर ! **भवतैव—पृथिवीमुदादाय चन्द्रमसि स्थापिता**]

**भावार्थः**—येनेश्वरेणान्तरिक्षे पृथिव्यस्तत्समीपे चन्द्रास्तत्समीपे पृथिव्यो, ऽन्योऽन्यं समीपस्थानि नक्षत्राणि, सर्वेषां मध्ये सूर्यलोकाः, एतेषु विविधाः प्रजाश्च रचयित्वा स्थापिताः। सर्वैस्तत्रस्थैर्मनुष्यैः स एवोपासितुं योग्योऽस्ति।

**भावार्थ**—जिस ईश्वर ने अन्तरिक्ष में पृथिवियाँ, उनके समीप चन्द्र, और उनके समीप पृथिवियाँ, एक दूसरे के समीप नक्षत्र, सबके मध्य में सूर्यलोक तथा इनमें विविध प्रजा को रच कर स्थापित किया है। वहाँ रहने वाले सब मनुष्यों को उसी ईश्वर की उपासना करना योग्य है।

[धीरासः—सेनां शस्त्राण्युदादायु—क्रूरस्य मध्ये शत्रून् जित्वा राज्यमैरयन्]

न यावन्मनुष्या बलक्रियाभ्यां युक्ता भूत्वा शत्रून् विजयन्ते, नैव तावत् स्थिरं राज्यसुखं प्राप्नुवन्ति। नैव युद्धबलाभ्यां विना शत्रवो बिभ्यति। न च विद्यान्यायविनयैर्विना यथावत् प्रजाः पालयितुं शक्नुवन्ति।

जब तक मनुष्य बल और पुरुषार्थ से युक्त होकर शत्रुओं को नहीं जीतते हैं तब तक उन्हें स्थिर राज्य-सुख प्राप्त नहीं हो सकता। युद्ध और बल (सेना) के बिना शत्रु कभी नहीं डरते। विद्या, न्याय और विनय के बिना प्रजा का पालन नहीं हो सकता।

[तथा—(चन्द्रमसि) आनंदे नित्यं प्रवर्त्तस्व]

तस्मात्—सर्वैर्जितेन्द्रियैर्भूत्वैतत्समासाद्य सर्वेषां सुखं कर्तुमनुलक्ष्य नित्यं प्रयतितव्याम्॥ १। २८॥

इसलिये—सबको जितेन्द्रिय होकर उक्त राज्य को प्राप्त करके सबको सुख देने का लक्ष्य बना कर नित्य प्रयत्न करना चाहिये॥ १। २८॥

**भाष्यसार**—१. **ईश्वर**—महान् गुणों से विशिष्ट होने से ईश्वर का नाम विरप्शी है। महान् ऐश्वर्य का इच्छुक मनुष्य भी 'विरप्शी' कहलाता है। ईश्वर ने ही चन्द्रलोक के समीप पृथिवी को स्थापित किया है।

२. **पृथिवी**—अन्नों से युक्त, प्राणियों के जीवन के लिये सब वस्तुओं को देने वाली है। विस्तृत प्रजा से युक्त है॥

३. **मनुष्यों का कर्त्तव्य**—इस पृथिवी पर सेना और शस्त्रों के बल से युद्ध में मेधावी लोग शत्रुओं को जीत कर राज्य प्राप्त करें।

४. **यज्ञ से दोषों का निवारण**—महान् ऐश्वर्य के इच्छुक मनुष्य ईश्वर का यजन करें। यज्ञ से सब दोषों एवं शत्रुओं का निवारण करके नित्य आनन्द में रहें॥

परमेष्ठी प्रजापतिः। **यज्ञो**=**देवता सर्वस्य**। पूर्वार्द्धे त्रिष्टुप् छन्दः। धैवतः स्वरः। उत्तरार्द्धे त्रिष्टुप् छन्दः। धैवतः स्वरः॥

**पुनः स संग्रामः किं कृत्वा जेतव्यो यज्ञश्चानुष्ठातव्य इत्युपदिश्यते॥**

फिर उक्त संग्राम कैसे जीतना और यज्ञ का अनुष्ठान कैसे करना चाहिये इस विषय का उपदेश किया है॥

प्रत्युष्टꣳ रक्षः प्रत्युष्टा ऽ अरातयो निष्टप्तꣳ रक्षो निष्टप्ता ऽ अरातयः ।
अनिशितोऽसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै सम्मार्ज्मि ।
प्रत्युष्टꣳ रक्षः प्रत्युष्टा ऽ अरातयो निष्टप्तꣳ रक्षो निष्टप्ता ऽ अरातयः ।
अनिशिताऽसि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै सम्मार्ज्मि ॥२९॥

**पदार्थः**—(**प्रत्युष्टम्**) प्रतिदग्धव्यम् (**रक्षः**) विघ्नकारी प्राणी (**प्रत्युष्टाः**) प्रतिदग्धव्याः (**अरातयः**) सत्यविरोधिनोऽरयः (**निष्टप्तम्**) यन्नितरां तप्यते तत् (**रक्षः**) बन्धनेन रक्षयितव्यम् (**निष्टप्ताः**) नितरां तप्यन्ते ये ते (**अरातयः**) विद्याविघ्नकारिणः (**अनिशितः**) न विद्यते नितरां शिता=तीव्रा क्रिया यस्मिन्स सग्रामो यज्ञपात्रं वा (**असि**) भवति । **अत्र पुरुषव्यत्ययः** (**सपत्नक्षित्**) सपत्नान्=शत्रून् क्षयति येन सः । अत्र कृतो बहुलमिति वार्तिकेन करणकारके क्विप् । क्षि क्षये इत्यस्य रूपम् । एतदुवटमहीधराभ्यां क्षिणु हिंसायामित्यस्य भ्रांत्या व्याख्यातम् (**वाजिनम्**) अन्नवन्तं वेगवन्तं वा । वाज इत्यन्ननामसु पठितम् ॥ **निघंटौ** २ । ७ ॥ (**त्वा**) तम् (**वाजेध्यायै**) वाजेनान्नेन युद्धेन वा इध्या=दीपनीया सेना यज्ञपात्रं वा यया क्रियया तस्यै (**संमार्ज्मि**) सम्यक् शोधयामि (**प्रत्युष्टम्**) नित्यं प्रजापालनाय तापनीयः (**रक्षः**) परसुखासहो **मनुष्यः** (**प्रत्युष्टाः**) प्रत्यक्षं ज्वालनीयाः (**अरातयः**) परसुखासोढारः (**निष्टप्तम्**) निःसारणीयः (**अरातयः**) अन्येभ्यो दुःखप्रदाः (**अनिशिता**) अतिविस्तीर्णा सेना कार्य्या वेदिर्वा (**असि**) अस्ति । अत्रापि व्यत्ययः (**सपत्नक्षित्**) सपत्नान् क्षयति यया सा (**वाजिनीम्**) बलवेगवतीम् (**त्वा**) त्वाम् (**वाजेध्यायै**) वाजेन=बहुसाधनसमूहेन संग्रामेण सेनया यज्ञेन वा प्रकाशनीयायै सत्यनीत्यै (**संमार्ज्मि**) सम्यक् शिक्षया शोधयामि ॥ **अयं मंत्रः** श० १ । ३ । १ । ४—११ व्याख्यातः ॥ २६ ॥

**प्रमाणार्थ**—(**असि**) भवति । यहां पुरुष-व्यत्यय है । (**सपत्नक्षित्**) क्षय अर्थ वाली 'क्षि' धातु से 'कृतो बहुलम्' इस वार्त्तिक से करण-कारक में क्विप् प्रत्यय करने से यह शब्द सिद्ध होता है । (**वाजिनम्**) 'वाज' शब्द निघं० (२ । ७) में अन्ननामों में पढ़ा है । (**असि**) भवति । यहां भी पुरुष व्यत्यय है । इस मन्त्र की व्याख्या शत० (१ । ३ । १ । ४—११) में की गई है ॥ १ । २६ ॥

[संग्रामः]

**सपदार्थान्वयः**—**अहं येन** [**अनिशितः**]=**अनिशितेन** न विद्यते नितरां शिता=तीव्रा क्रिया यस्मिन् स संग्रामः (तेन) [**सपत्नक्षित**] **सपत्नक्षिता=संग्रामेण** सपत्नान्=शत्रून् क्षयति येन सः, (तेन) **प्रत्युष्टं** प्रतिदग्धव्यं **रक्षः** विघ्नकारी प्राणी, **प्रत्युष्टाः** प्रति दग्धव्याः **अरातयः** सत्यविरोधिनोऽरयः, **निष्टप्तं** यन्नितरां तप्यते तत् **रक्षः** बन्धनेन रक्षयितव्यं, **निष्टप्ताः** नितरां तप्यन्ते ये ते **अरातयः** विद्याविघ्नकारिणः [**असि**]=**भवन्ति**, [**त्वा**] **तं वाजिनं=युद्धाङ्गानि** वेगवन्तं **वाजेध्यायै** वाजेन=युद्धेन **इध्या**=दीपनीया सेना यया क्रियया तस्यै **सम्मार्ज्मि** सम्यक् शोधयामि ॥

[संग्राम]

**भाषार्थ**—मैं, जिस [**अनिशितः**] तीव्र क्रिया से सर्वथा रहित [**सपत्नक्षित्**] सपत्न अर्थात् शत्रुओं का क्षय करने वाले संग्राम से (**रक्षः**) विघ्नकारी प्राणी को (**प्रत्युष्टम्**) जला दिया जाता है, (**अरातयः**) सत्य के विरोधी शत्रुओं को भी (**प्रत्युष्टाः**) जला दिया जाता है, (**रक्षः**) बन्धन में रखने योग्य मनुष्य को (**निष्टप्तम्**) सन्ताप युक्त किया जाता है, (**अरातयः**) विद्या में विघ्न करने वाले लोगों को (**निष्टप्ताः**) सन्ताप युक्त किया जाता [**असि**] है, [**त्वा**] उस (**वाजिनम्**) उस वेगवान् युद्ध को एवं उसके अङ्गों को (**वाजेध्यायै**) युद्ध से चमकने वाली सेना के लिए (**सम्मार्ज्मि**) उत्तम नीति से शुद्ध करता हूँ ॥

[सेना]

**अहं यया [सपत्नक्षित्]=सपत्नक्षिता** सपत्नान्=शत्रून् क्षयति यया सा (तया), **[अनिशिता]=अनिशितया=सेनया** अतिविस्तीर्णा सेना कार्या (तया), **प्रत्युष्टं** नित्यं प्रजापालनाय तापनीयः **रक्षः** परसुखासहो मनुष्यः, **प्रत्युष्टाः** प्रत्यक्षं ज्वालनीया **अरातयः** परसुखासोढारः, **निष्टप्तं** निःसारणीयः **रक्षः** परसुखासहो मनुष्यः, **निष्टप्ताः** नितरां तप्यन्ते ये ते **अरातयः** अन्येभ्यो दुःखप्रदा **[असि]=भवन्ति [त्वा]=तां वाजिनीं=सेनां** बलवेगवतीं **शिक्षया वाजेध्यायै** वाजेन=युद्धेन इध्या=दीपनीया सेना यया क्रियया तस्यै, वाजेन=बहुसाधन-**समूहेन** सेनया प्रकाशनीयायै सत्यनीत्यै **सम्मार्ज्मि** सम्यक् शिक्षया शोधयामि ॥

[सेना]

**मैं,** जिस **[सपत्नसित्]** सपत्न अर्थात् शत्रुओं का क्षय करने वाली **[अनिशिता]** अति विस्तीर्ण सेना से **(रक्षः)** दूसरे के सुख को न सहन करने वाले मनुष्य को **(प्रत्युष्टम्)** प्रजा-पालन के लिये सन्ताप युक्त किया जाता है, **(अरातयः)** दूसरों के सुखों को न सहन करने वाले लोगों को **(प्रत्युष्टाः)** प्रत्यक्ष जला देना चाहिए, **(रक्षः)** दूसरे के सुख को न सहन करने वाले मनुष्य को **(निष्टप्तम्)** निकाल देना चाहिए, **(अरातयः)** दूसरों को दुःख देने वाले लोगों को **(निष्टप्ताः)** सन्ताप युक्त किया जाता **[असि]** है **[त्वा]** उस **(वाजिनीम्)** बल और वेग वाली सेना को **(वाजेध्यायै)** युद्ध से चमकने वाली सेना के लिये तथा बहुत साधनों से सेना के द्वारा प्रकाशित की जाने वाली सत्य नीति के लिये **(सम्मार्ज्मि)** उसे शिक्षा से शुद्ध करता हूँ।

[यज्ञः]

**अहं येन [अनिशितः]=अनिशितेन** न विद्यते नितरां शिता=तीव्रा क्रिया यस्मिँस्तद् यज्ञपात्रं (तेन), अतिविस्तीर्णा वेदिः कार्या (तया) वा **[सपत्नक्षित्]=सपत्नक्षिता=यज्ञेन** सपत्नान्=शत्रून् क्षयति येन सः(तेन), **प्रत्युष्टं** प्रतिदग्धव्यं **रक्षः** विघ्नकारी प्राणी, **प्रत्युष्टाः** प्रतिदग्धव्याः **अरातव्यः** सत्यविरोधिनोऽरयः, **निष्टप्तं** यन्नितरां तप्यते तत् **रक्षः** बन्धनेन रक्षितव्यं, **निष्टप्ताः** नितरां तप्यन्ते ये ते **अरातयः** विद्याविघ्नकारिणः **[असि]=भवन्ति [त्वा]=तं वाजिनं=यज्ञम्** अन्नवन्तं **वाजेध्यायै** वाजेन=अन्नेन इध्या=दीपनीयं यज्ञ-पात्रं यथा क्रियया तस्यै, वाजेन=बहु साधन समूहेन यज्ञेन प्रकाशनीयायै सत्यनीत्यै **सम्मार्ज्मि** सम्यक् शोधयामि ॥ १ । २९ ॥

[यज्ञ]

मैं, **[अनिशितः]** तीव्र क्रिया से रहित यज्ञपात्र वाले एवं अति विस्तीर्ण वेदि वाले **[सपत्नशित्]** सपत्न अर्थात् शत्रुओं का क्षय करने वाले जिस यज्ञ से **(रक्षः)** विघ्नकारी प्राणी को **(प्रत्युष्टम्)** विनष्ट किया जाता है, **(अरातयः)** सत्य के विरोधी शत्रुओं को **(प्रत्युष्टाः)** नष्ट किया जाता है, **(रक्षः)** बन्धन में रखने योग्य मनुष्य को **निष्टप्तम्)** सन्ताप युक्त किया जाता है, **(अरातयः)** विद्या में विघ्न करने वाले लोगों को **(निष्टप्ताः)** सन्ताप युक्त किया जाता **(असि)** है **[त्वाम्]** उस **(वाजिनम्)** अन्न के निमित्त यज्ञ को **(वाजेध्यायै)** अन्न से सुशोभित यज्ञ पात्र के लिये एवं बहुत साधनों वाले यज्ञ से प्रकाशित होने वाली सत्यनीति के लिए **(सम्मार्ज्मि)** उत्तम नीति से पवित्र करता हूँ ॥ १ । २९ ॥

**[अहं येन···सपत्नक्षिता···निष्टप्ता अरातयो [असि] भवन्ति तं वाजिनं···वाजेध्यायै सम्मार्ज्मि]**

ईश्वर आज्ञापयति—सर्वैर्मनुष्यैर्विद्याशुभगुण-दीप्तया दुष्टशत्रुनिवारणाय नित्यं पुरुषार्थः कर्त्तव्यः ।

***भावार्थ***—ईश्वर आज्ञा देता है कि सब मनुष्यों को विद्यादि शुभ गुणों के प्रकाशक से दुष्ट शत्रुओं को हटाने के लिये नित्य पुरुषार्थ करना चाहिए ।

[अहं यया'''अनिशितया=सेनया''''''निष्टप्ता अरातयः [असि] भवन्ति [त्वा] तां''''''शिक्षया वाजेध्यायै सम्मार्ज्मि]

सुशिक्षया शस्त्रास्त्रसत्पुरुषाढ्यसेनया श्रेष्ठानां रक्षणं दुष्टानां ताडनं च नित्यं कर्त्तव्यम् ।

उत्तम शिक्षा से,शस्त्र-अस्त्र तथा सत्पुरुषों से भरपूर सेना के द्वारा श्रेष्ठ जनों की रक्षा और दुष्टों की ताड़ना नित्य करनी चाहिए ।

[यज्ञेन''''''सम्मार्ज्मि]

यतोऽशुद्धिक्षयात् सर्वत्र पवित्रता प्रवर्त्तेत ॥ १ । २६ ॥

जिससे—अशुद्धि के नाश से सर्वत्र पवित्रता का प्रसार हो ॥ १ । २६ ॥

**भा० पदार्थ**—वाजेध्यायै=विद्याशुभगुणदीप्तये । शास्त्रास्त्र सत्पुरुषाढ्यसेनायै ।

**भाष्यसार**—१. **संग्राम विजय**—संग्राम से विघ्नकारी प्राणियों का दहन करें। और जो सत्य के विरोधी, विद्या आदि शुभ कर्मों में विघ्न करने वाले शत्रु हैं उन्हें संग्राम से सन्तापयुक्त रखें। युद्ध से सेना के गुण प्रदीप्त होते हैं एवं सेना की शुद्धि होती है। युद्ध से सेना को शुद्ध करते रहें। विशुद्ध विशाल सेना से राक्षस लोगों को प्रजा की रक्षा के लिये नितान्त सन्तापयुक्त रखें। शत्रु लोगों को प्रत्यक्ष (**सब के सामने**) जलायें। अपनी सेना को प्रशिक्षित करके संग्राम में सदा विजय प्राप्त करें।

२. **यज्ञानुष्ठान**—यहाँ यज्ञ को तीव्र क्रिया से रहित बतलाया है। अतः यज्ञ का शान्तिपूर्वक अनुष्ठान करें। यज्ञ के लिए एक अति विस्तृत वेदि बनायें। यज्ञ से विघ्नकारी प्राणियों तथा सत्य के विरोधी विद्या आदि शुभ कार्यों में बाधा डालने वाले लोगों का निवारण करें। यज्ञ अन्न का शोधक एवं सत्य नीति का प्रकाशक है। यज्ञ से अन्नादि पदार्थों की शुद्धि तथा लोगों के दुष्ट गुणों का भी शोधन करें। यज्ञ से ही लोगों के राक्षस-स्वभाव और अराति स्वभाव का दहन होता है। अतः यज्ञा-नुष्ठान नित्य करें॥

**समीक्षा**—'सपत्नक्षित्' इस पद की व्याख्या में महर्षि लिखते हैं—"सपत्नान्=शत्रून क्षयति येन सः। अत्र 'कृतो बहुलम्' (३।३।११३ भा० वा०) इति वार्त्तिकेन करणकारके क्विप्। 'क्षि क्षये' इत्यस्य रूपम्। एतदुवटमहीधराभ्यां क्षिणु हिंसायामित्यस्य भ्रान्त्या व्याख्यातम्" अर्थात्—शत्रुओं का जिस साधन से क्षय किया जाता है उसे 'सपत्नक्षित' कहते हैं। यहां 'कृतो बहुलम्' इस भाष्य वार्त्तिक से करण-कारक (**साधन-अर्थ**) में क्विम् प्रत्यय है। यह 'क्षि क्षये' धातु का रूप है। इसके विपरीत तथाकथित वेदभाष्यकर उवट और महीधर लिखते हैं—"सपत्नान् क्षिणोतीति सपत्नक्षित्। क्षिण क्षिणि हिंसायाम्। क्षिण हिंसार्थः" (**उवट**) ॥ क्षिणु हिंसायाम्। सपत्नानस्मच्छत्रून् क्षिणोति हिनस्तीति सपत्नाक्षित् (**महीधर**)"॥ अर्थात् 'सपत्नाक्षित्' पद सपत्न उपपद हिंसार्थक क्षिणु धातु से सिद्ध होता है। किसी शब्द की सिद्धि में केवल धातु का निर्देश मात्र कर देना पर्याप्त नहीं। धातु और प्रत्यय दोनों का निर्देश करना चाहिये। क्षिणु धातु से क्या प्रत्यय किया जाये जिससे 'क्षित्' शब्द सिद्ध हो इसका उवट और महीधर ने कोई निर्देश नहीं किया। क्विप् प्रत्यय सम्भव है, उससे क्षित् बन नहीं सकता, क्षिण बनेगा। अतः उवट और महीधर की यह व्याकरण ज्ञान शून्यता नहीं तो और क्या है॥ १ । २६॥

परमेष्ठी प्रजापतिः । **यज्ञः**=स्पष्टम् । निचृज्जगती । निषादः ॥

**पुनः स यज्ञः कीदृशः किंफलो भवतीत्युपदिश्यते ॥**

फिर उक्त यज्ञ किस प्रकार का और किस फल का देने वाला होता है, यह उपदेश किया है ॥

**अदि॑त्यै॒ रास्ना॑सि॒ विष्णो॑र्वे॒ष्पो᳖स्यू॒र्ज्जे त्वाऽद॑ब्धेन त्वा॒ चक्षु॒षाव॑पश्यामि ।**
**अ॒ग्नेर्जि॒ह्वासि॑ सु॒हूर्दे॒वेभ्यो॒ धाम्ने॑ धाम्ने मे भव॒ यजु॑षे यजु॑षे ॥३०॥**

**पदार्थः**—(**अदित्यै**) पृथिव्या अन्तरिक्षस्य वा । अत्र षष्ठ्यर्थे चतुर्थी । अदितिरिति पृथिवीनामसु पठितम् ॥ निघं० १ । १ ॥ पदनामसु च ॥ निघं० ४ । १ ॥ अनेन गमनागमनव्यवहारप्राप्तिहेतुरवकाशोऽन्तरिक्षं गृह्यते (**रास्ना**) रसहेतुभूता क्रिया । रास्ना सास्ना स्थूणा वीणाः ॥ उ० ३ । १५ ॥ अनेन रसधातोर्निपातनान्नः प्रत्ययः (**असि**) अस्ति वा । अत्र सर्वत्र पक्षे व्यत्ययः (**विष्णोः**) व्यापकेश्वरस्य यज्ञस्य वा । यज्ञो वै विष्णुः ॥ श० १ । १ । २ । १३ ॥ (**वेष्पः**) वेवेष्टि=व्याप्नोति पृथिवीमन्तरिक्षं वा स यज्ञोत्थो वाष्पो ज्ञानसमूहो वा । पानीविषिभ्यः पः ॥ उ० ३ । २३ ॥ अनेन विषेः पः प्रत्ययः (**असि**) अस्ति वा (**ऊर्ज्जे**) अन्नाय रसाय पराक्रमाय च (**त्वा**) त्वां तं वा (**अदब्धेन**) सुखयुक्तेन (**त्वा**) त्वां तं वा (**चक्षुषा**) विज्ञानेन प्रत्यक्षप्रमाणेन नेत्रेण (**अव**) क्रियार्थे । अवेति विनिग्रहार्थीयः ॥ निरु० १ । ३ ॥ (**पश्यामि**) संप्रेक्षे (**अग्नेः**) भौतिकस्य (**जिह्वा**) जिहीते=विजानाति रसमनया सा । शेवायह्वाजिह्वा० ॥ उ० १ । १५४ ॥ अनेनायं निपातितः । (**असि**) अस्ति वा (**सुहूः**) सुष्ठु हूयते यो या वा सा क्वतो बहुलमिति कर्मणि ह्वेञ् इत्यस्य क्विबन्तः प्रयोगः (**देवेभ्यः**) विद्वद्भ्यो दिव्यगुणेभ्यो वा (**धाम्ने धाम्ने**) दधति वस्तूनि सुखानि च यस्मिन् तस्मै प्रत्यधिकरणप्राप्तये । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति । निरु० ९ । २८ ॥ अत्र वीप्सायां द्वित्वम् (**भव**) भवति वा (**यजुषे यजुषे**) यजन्ति येन तस्मै प्रति यजुर्वेदमन्त्रम् ॥ अयं मंत्रः श० १ । ३ । १ । १२—१९ व्याख्यातः ॥ ३० ॥

**प्रमाणार्थ**—(**अदित्यै**) पृथिव्याः । यहां षष्ठी-अर्थ में चतुर्थी विभक्ति है । 'अदिति' शब्द निघं० (१ । १) में पृथिवी-नामों में और निघं० (४ । १) में पद-नामों में पढ़ा है । इससे गमन-आगमन रूप व्यवहार का प्राप्ति का हेतु अवकाश (**अन्तरिक्ष**) का ग्रहण होता है । (**रास्ना**) 'रास्ना' शब्द 'रास्ना सास्ना स्थूणा वीणाः' उणादि (३ । १५) से 'रस' धातु से न-प्रत्ययान्त निपातित है । (**असि**) अस्ति । इस मन्त्र में सर्वत्र 'असि' पद पर पाक्षिक व्यत्यय है । (**विष्णोः**) शत० (१ । १ । २ । १३) के अनुसार 'विष्णु' का अर्थ 'यज्ञ' है । (**वेष्पः**) 'वेष्प' शब्द 'पानी विषिभ्यः पः' उणादि (३ । २३) से 'प' प्रत्यय करने पर सिद्ध होता है । (**अव**) निरु० (१ । ३) के अनुसार 'अव' उपसर्ग का अर्थ 'नियन्त्रण' (दबाना) है । (**जिह्वा**) 'जिह्वा' शब्द 'शेवा यह्वा जिह्वा०' उणादि (१ । १५४) से नियातित है । (**सुहूः**) यहां 'कृतो बहुलम्' से कर्म में 'ह्वेञ' धातु से 'क्विप्' प्रत्यय का प्रयोग है । (**धाम्ने-धाम्ने**) निरु० (९-२८) के अनुसार स्थान, नाम और जन्म ये तीन 'धाम' होते हैं । वीप्सा-अर्थ में 'धाम' शब्द का दो बार पाठ हुआ है । इस मन्त्र की व्याख्या शत० (१ । ३ । १ । १२-१९) में की गई है । १ । ३० ॥

**सपदार्थान्वयः**—हे जगदीश्वरः ! यस्त्वम् [**अदित्यै**]=आदित्याः पृथिव्या **रास्ना** रसहेतुभूता क्रिया **असि** [**विष्णोः**] **विष्णुः** व्यापकेश्वरो **असि, सर्वस्य वेष्पः** वेवेष्टि=व्याप्नोति

**भावार्थ**—हे जगदीश्वर ! जो आप [**अदित्यै**] पृथिवी के (**रास्ना**) पदार्थों को रसयुक्त करने वाले (**असि**) हो, [**विष्णोः**] व्यापक ईश्वर (**असि**) हो, सब (**वेष्पः**) पृथिवी वा अन्त-

पृथिवीमन्तरिक्षं वा स ज्ञान-समूहः **असि, अग्नेः** भौतिकस्य **जिह्वा** जिहीते=विजानाति रसमनया सा **असि, देवेभ्यः** विद्वद्भ्यो दिव्यगुणेभ्यो वा **धाम्ने धाम्ने** दधति वस्तूनि सुखानि च यस्मिन् तस्मै प्रत्यधिकरणप्राप्तये **यजुषे यजुषे** यजन्ति येन तस्मै प्रति यजुर्वेदमन्त्रं **सुहूः** सुष्ठु हूयते यो या वा सा **असि** ।

एवम्भूतं [त्वा]=त्वामहमदब्धेन सुखयुक्तेन **चक्षुषा** विज्ञानेन प्रत्यक्षप्रमाणेन नेत्रेण **ऊर्ज्जे** अन्नाय रसाय पराक्रमाय च **अदित्यै** पृथिव्या अन्तरिक्षस्य वा **देवेभ्यो** विद्वद्भ्यो दिव्यगुणेभ्यो वा **धाम्ने धाम्ने** दधति वस्तूनि सुखानि च यस्मिंस्तस्मै प्रत्यधिकरणप्राप्तये यजुषे यजुषे यजन्ति येन तस्मै प्रति यजुर्वेदमंत्र चाऽवपश्यामि संप्रेक्षे ।

स च त्वमस्माभिः सर्वत्र कृपया विदितः पूजितश्च [मे] भवेत्येकः ॥

**द्वितीयमन्वयमाह**—यतोऽयं यज्ञो [ऽदित्यै]=अदित्याः अन्तःरक्षस्य **रास्ना** रसहेतुभूता क्रिया [असि]=अस्ति, **विष्णोः** यज्ञस्य **वेष्पः** वेवेष्टि=व्याप्नोति पृथिवीमन्तरिक्षं वा स यज्ञोत्थो वाष्पो [असि]=अस्ति, **अग्नेः** भौतिकस्य **जिह्वा** जिहीते=विजानाति रसमनया सा [असि]=अस्ति, देवेभ्यो विद्वद्भ्यो दिव्यगुणेभ्यो वा **धाम्ने धाम्ने** दधाति वस्तूनि सुखानि च यस्मिँस्तस्मै प्रत्यधिकरण प्राप्तये **यजुषे यजुषे** यजन्ति येन तस्मै प्रतियजुर्वेदमन्त्रं **सुहूः** सुष्ठु हूयते यो या वा सा [भव]=भवति, **तस्मात्तमहमदब्धेन** सुखयुक्तेन **चक्षुषा** विज्ञानेन प्रत्यक्षप्रमाणेन नेत्रेण **ऊर्ज्जे** अन्नाय रसाय पराक्रमाय च **अवपश्यामि** संप्रेक्षे, **तथाऽदित्यै** पृथिव्या अन्तरिक्षस्य वा **देवेभ्यो** विद्वद्भ्यो दिव्यगुणेभ्यो वा **धाम्ने धाम्ने** दधाति वस्तूनि सुखानि च यस्मिँस्तस्मै प्रत्यधिकरणप्राप्तये

रिक्ष को व्याप्त करने वाले ज्ञानभण्डार (**असि**) हो, (**अग्नेः**) भौतिक अग्नि के (**जिह्वा**) रस को जानने वाले (**असि**) हो, (**देवेभ्यः**) विद्वानों वा दिव्य गुणों की प्राप्ति के लिये, (**धाम्ने धाम्ने**) वस्तुओं और सुखों के प्रत्येक आधार की प्राप्ति के लिये, (**यजुषे यजुषे**) यज्ञ करने के साधन प्रत्येक यजुर्वेद के मन्त्र के लिये (**सुहूः**) उत्तम हवन सामग्री (**असि**) हो ।

इस प्रकार के [**त्वा**] आपको मैं (**अदब्धेन**) सुख युक्त (**चक्षुषा**) विज्ञान एवं प्रत्यक्ष प्रमाण रूप नेत्र से (**ऊर्जे**) अन्न, रस और पराक्रम की प्राप्ति के लिये (**अादित्यै**) पृथिवी वा अन्तरिक्ष के (**देवेभ्यः**) विद्वानों वा दिव्यगुणों की प्राप्ति के लिए (**धाम्ने धाम्ने**) वस्तुओं और सुखों के प्रत्येक आधार की प्राप्ति के लिये और (**यजुषे यजुषे**) यज्ञ के साधन प्रत्येक यजुर्वेद के मन्त्र के ज्ञान के लिये (**अवपश्यामि**) उत्तम रीति से देखता हूँ ।

और आप सर्वत्र कृपा करके [**मे**] मेरे लिए विदित और पूजित होओ ॥ यह मन्त्र का पहला अन्वय है ॥

**दूसरा अन्वय**—जिस कारण यह यज्ञ [**आदित्यै**] अन्तरिक्ष को (**रास्ना**) रस युक्त करने वाला [**असि**] है, (**विष्णोः**) यज्ञ का (**वेष्पः**) पृथिवी वा अन्तरिक्ष को व्याप्त करने वाला यज्ञ से उत्पन्न वाष्प (**भांप**) रूप [**असि**] है, (**अग्नेः**) भौतिक अग्नि के (**जिह्वा**) रसों को ग्रहण करने वाला [**असि**] है (**देवेभ्यः**) विद्वानों वा दिव्य गुणों की प्राप्ति के लिए (**धाम्ने धाम्ने**) वस्तुओं और सुखों के प्रत्येक आधार की प्राप्ति के लिये, (**यजुषे यजुषे**) यज्ञ के साधन यजुर्वेद के प्रत्येक मन्त्र के लिये (**सुहूः**) उत्तम हवन सामग्री [**भव**] बनता है । इस लिये उस यज्ञ को मैं (**अदब्धेन**) सुखयुक्त (**चक्षुषा**) विज्ञान एवं प्रत्यक्ष प्रमाण के साधन नेत्र से (**ऊर्जे**) अन्न, रस और पराक्रम की प्राप्ति के लिये (**अवपश्यामि**) देखता हूँ, तथा—(**अदित्यै**) पृथिवी वा अन्तरिक्ष

यजुषे यजुषे यजन्ति येन तस्मै प्रतियजुर्वेदमन्त्रं हिताय ऽवपश्यामि संप्रेक्षे [इति द्वितीयः] ॥ १ । ३० ॥

के (**देवेभ्यः**) विद्वानों वा दिव्य गुणों की प्राप्ति के लिये (**धाम्ने धाम्ने**) वस्तुओं वा सुखों के प्रत्येक आधार की प्राप्ति के लिये (**यजुषे यजुषे**) यज्ञ के साधन प्रत्येक यजुर्वेद के मन्त्र को धारण करने के लिये (**अवपश्यामि**) उत्तम रीति से देखता हूँ ॥ १ । ३० ॥

[हे जगदीश्वर ! ···त्वं···धाम्ने धाम्ने···असि, स च त्वम्···विदितः पूजितश्च···भव]

**भावार्थः**—अत्र श्लेषालंकारः ॥ सर्वैर्मनुष्यैरयं जगदीश्वरः प्रतिवस्तुषु स्थितः प्रतिपादितः पूज्यश्च भवतीति मन्तव्यम् ।

**भावार्थ**—इस मन्त्र में श्लेष अलङ्कार है ॥ सब मनुष्यों को ऐसा मानना चाहिये कि यह जगदीश्वर, प्रत्येक वस्तु में स्थित है, वेदों में प्रतिपादित है, और पूजा के योग्य है ।

[अथ यज्ञः ···यजुषे यजुषे सुहूर्भवति,···तमहम्···ऊर्जे···अदित्यै देवेभ्य···धाम्ने धाम्ने···अव···पश्यामि]

तथा चायं यज्ञः प्रतिमन्त्रेण सम्यमुनुष्ठितः सर्वप्राणिभ्यः प्रतिवस्तुषु पराक्रमबलप्राप्तये भवतीति ॥ १ । ३० ॥

और—यह यज्ञ प्रत्येक मन्त्र से विधिपूर्वक किया हुआ सब प्राणियों के लिये प्रत्येक वस्तु में पराक्रम और बल देने वाला होता है ॥ १ । ३० ॥

**भा० पदार्थः**—धाम्ने धाम्ने=प्रतिवस्तुषु । यजुषे यजुषे=प्रतिमन्त्रेण । ऊर्जे=बल-पराक्रम प्राप्तये । देवेभ्यः=सर्वप्राणिभ्यः ॥

**भाष्यसार**—१. **ईश्वर**—पृथिवी पर रसयुक्त पदार्थों को उत्पन्न करने वाला, सर्व-व्यापक, ज्ञानस्वरूप, अग्नि आदि पदार्थों के तत्त्व को जानने वाला, विद्वानों वा दिव्यगुणों की प्राप्ति कराने वाला है, प्रत्येक धाम और प्रत्येक यजुर्वेद के मन्त्र को उत्तम रीति से देने वाला है ॥

२. **ईश्वर दर्शन**—उक्त गुणों वाले ईश्वर को सुखदायक, प्रत्यक्ष आदि प्रमाणों से युक्त, विज्ञान के नेत्र से देखें । ईश्वर दर्शन से ही सब प्रकार का बल, दिव्यगुण, विद्वत्संग, प्रत्येक धाम तथा प्रत्येक यजुर्मन्त्र की उपलब्धि होती है ॥

३. **यज्ञ**—यज्ञ एक ऐसी क्रिया है जो पृथिवी और आकाश के पदार्थों को रस से युक्त कर देती है । यज्ञ से उत्थित वाष्प पृथिवी और अन्तरिक्ष को वेष्टित कर लेता है । इसीलिये इसको पृथिवी और अन्तरिक्ष की त्वचा कहा गया है । यह यज्ञ भौतिक अग्नि की जिह्वा है । यज्ञ से ही अग्नि जिह्वा के समान पदार्थों को ग्रहण करती है और हव्य-द्रव्यों के गुणों को वितरित करती है । यज्ञ से विद्वानों की पूजा, उनका संग तथा उनको दान आदि का सब व्यवहार सिद्ध होता है । यज्ञ से ही दिव्य गुणों की प्राप्ति होती है । यज्ञ प्रत्येक वस्तु और प्रत्येक सुख का देने वाला वाला है । प्रत्येक यजुर्वेद के मन्त्र का ज्ञान भी यज्ञ से ही होता है । इसलिये अन्न, रस और बल की प्राप्ति के लिये परम सुखदायक विज्ञान के नेत्र से इस यज्ञ विद्या को समझें ॥

**म्रा० पदार्थः**—औशिजः=विद्याजः पुत्रः । स्वरणम्=विद्याध्यापकम् । सोमानम्=विद्याप्रकाशितं सर्वक्रियाकुशलम् ॥

**भाष्यसार**—**ईश्वर प्रार्थना किस लिये**—ईश्वर सनातन वेदशास्त्र का पति है, जो प्रार्थना करने से औरस तथा विद्याज पुत्र प्रदान करता है, जो विद्याअध्ययन कर्म में कुशल, विद्या ग्रहण के इच्छुक, सब विद्याओं के प्रवक्ता, औषधिसारों एवं विद्याओं के साधक, सब क्रियाओं में कुशल और विद्या से प्रकाशित होते हैं ॥ ३ । २८ ॥

मेधातिथिः । **बृहस्पतिः**=ईश्वरः ॥ गायत्री । षड्जः ॥

**पुनः स कीदृश इत्युपदिश्यते ॥**

फिर वह ईश्वर कैसा है, इस विषय का उपदेश किया जाता है ॥

**यो रेवान् योऽअमीवहा वसुवित् पुष्टिवर्द्धनः । स नः सिषक्तु यस्तुरः ॥ २९ ॥**

**पदार्थः**—(**यः**) ब्रह्मणस्पतिर्जगदीश्वरः (**रेवान्**) विद्याधनवान् । **अत्र रयिशब्दान्मतुप् । छन्दसीरः ॥ अ० ८ । २ । १५ ॥ इति मकारस्थाने वकारादेशः । रयेर्मतौ संप्रसारणं बहुलं वक्तव्यम् ॥ अ० ६ । १ । ३७ ॥ इति वार्तिकेन यकारस्थाने संप्रसारणादेशश्च** (**यः**) महान् (**अमीवहा**) योऽमीवानविद्यादिरोगान् हन्ति सः (**वसुवित्**) यो वसूनि=सर्वाणि वस्तूनि यथावद्वेत्ति वेदयति वा सः (**पुष्टिऽवर्द्धनः**) पुष्टिं=शरीरात्मबलं धातुसाम्यं च वर्द्धयतीति (**सः**) परमात्मा (**नः**) अस्मान् **सिषक्तु**) संयोजयतु । **षच समवाय इत्यस्माच्छपः स्थाने बहुलं छन्दसीति श्लुर्बहुलं छन्दसीत्यभ्यासस्येकारादेशश्च** (**यः**) उक्तो वक्ष्यमाणश्च (**तुरः**) शीघ्रकारी ॥ **अयं मंत्रः शत० २ । ३ । ४ । ३५ व्याख्यातः ॥ २९ ॥**

**प्रमाणार्थ**—(**रेवान्**) यहां 'रयि' शब्द से मतुप् प्रत्यय है तथा 'छन्दसीरः' (अ० ८ । २ । १५) सूत्र से मकार को वकार आदेश हो गया है । 'रयेर्मतौ सम्प्रसारणं बहुलं वक्तव्यम्' (अ० ६ । १ । ३७) वार्तिक से यकार को सम्प्रसारण हो गया है । (**सिषक्तु**) यहां समवाय अर्थ वाली 'षच्' धातु से परे 'शप्' के स्थान में 'बहुलं छन्दसि' [**अ०** २ । ४ । ७३] सूत्र से श्लु और 'बहुलं छन्दसि' [अ० ७ । ४ । ७८] सूत्र से अभ्यास का इकार आदेश है । इस मन्त्र की व्याख्या शत० (२ । ३ । ४ । ३५) में की गई है ॥ ३ । २९ ॥

**सपदार्थान्वयः**—**यो** महान् **रेवान्** विद्याधनवान् **अमीवहा** योऽमीवानविद्यादिरोगान् हन्ति स **वसुवित्** यो वसूनि=सर्वाणि वस्तूनि यथावद्वेत्ति वेदयति वा स **पुष्टिवर्द्धनः** पुष्टिं=शरीरात्मबलं धातुसाम्यं च वर्द्धयतीति [**यः**] उक्तो वक्ष्यमाणश्च तुरः शीघ्रकारी [**यः**]=**ब्रह्मणस्पतिर्जगदीश्वरोऽस्ति** सः परमात्मा **नः**=**अस्मान् शुभैर्गुणैः कर्मभिश्च सह सिषक्तु**=**संयोजयतु** ॥ ३ । २९ ॥

**भाषार्थ**—(**यः**) जो महान् (**रेवान्**) विद्या का धनी है एवं (**अमीवहा**) अविद्या आदि रोगों का नाशक है तथा (**वसुवित्**) जो सब वस्तुओं को यथावत् जानता एवं जनाता है और (**पुष्टिवर्द्धनः**) शारीरिक, आत्मिक बलों और धातुओं की साम्य अवस्था को बढ़ाने वाला और (**तुरः**) शीघ्रकारी है (**यः**) वह वेदपति जगदीश्वर है सो (**नः**) हमें शुभ गुणों से और शुभ कर्मों से (**सिषक्तु**) संयुक्त करे ॥ ३ । २९ ॥

[रेवान्]

**भावार्थः**—यदिदं विश्वस्मिन् धनमस्ति तदिदं सर्वं जगदीश्वरस्यैव वर्तते। मनुष्यैर्यादृशी प्रार्थनेश्वरस्य क्रियते स्वैरपि तादृश एव पुरुषार्थः कर्त्तव्यः। यथा—नैव रेवानितीश्वरस्य विशेषणमुक्त्वा श्रुत्वा च कश्चित् कृतकृत्यो भवति, किं तर्हि—स्वेनापि परमपुरुषार्थेन धनवृद्धिरक्षणे सततं कार्ये।

**भावार्थ**—जो यह विश्व में धन है वह सब ईश्वर का ही है। मनुष्य जैसी ईश्वर से प्रार्थना करें स्वयं भी वैसा ही पुरुषार्थ करें। जैसा 'रेवान्' इस ईश्वर के विशेषण को कह कर और सुन कर कोई भी कृतार्थ (फलवान्) नहीं होता किन्तु अपने परम पुरुषार्थ से भी धन की वृद्धि और रक्षा नित्य करनी योग्य है।

[अमीवहा]

यथा सोऽमीवहाऽस्ति, तथैव मनुष्यैरपि रोगा नित्यं हन्तव्याः।

जैसे वह ईश्वर अमीवहा=रोगहन्ता है वैसे ही मनुष्य भी रोगों का नित्य हनन करें।

[वसुवित्]

यथा स वसुविदस्ति तथैव यथाशक्ति पदार्थविद्या कार्या।

जैसे वह ईश्वर वसुवित् वस्तुओं को जानने वाला है वैसे ही यथाशक्ति पदार्थ विद्या को जानें।

[पुष्टिवर्द्धनः]

यथा स सर्वेषां पुष्टिवर्द्धनस्तथैव सर्वेषां नित्यं पुष्टिर्वर्द्धनीया।

जैसे वह ईश्वर सबका पुष्टि-वर्द्धक है, वैसे ही मनुष्यों को सबकी पुष्टि नित्य बढ़ानी चाहिये।

[तुरः]

यथा स शीघ्रकारी तथैवेष्टानि कार्याणि शीघ्रं कर्त्तव्यानि।

जैसे वह ईश्वर तुर=शीघ्रकारी है वैसे ही सब मनुष्यों को अभीष्ट कार्य शीघ्र करने चाहियें।

[ ब्रह्मणस्पतिर्जगदीश्वरः......नः=अस्मान् शुभैर्गुणैः कर्मभिश्च सह=सिषक्तु=संयोजयतु ]

यथा तस्य शुभगुणकर्मप्राप्त्यर्था प्रार्थना क्रियते तथैव सर्वान् मनुष्यान् परमप्रयत्नेन शुभगुण कर्माचरणेन सह वर्तमानान् नित्यं संयोजयत्विति॥ ३।२९॥

जैसे हम उस ईश्वर से शुभ गुण, कर्म प्राप्ति के लिये प्रार्थना करें वैसे ही सब मनुष्यों को परम प्रयत्न से शुभ गुण कर्म आचरण से वह नित्य युक्त करे॥ ३।२९॥

**भाष्यसार**—१. **ईश्वर कैसा है**—जगदीश्वर महान्, विद्या का धनी, अविद्यादि रोगों का हन्ता, पदार्थ विद्या का वेत्ता, तथा ज्ञापक, शारीरिक, आत्मिक बल का तथा धातुसाम्य का वर्द्धक, शीघ्रकारी है।

२. **ईश्वर-प्रार्थना**—उक्त गुणों वाला ब्रह्मणस्पति=जगदीश्वर हमें शुभ गुण कर्मों से युक्त करें॥ ३।२९॥

सप्तधृतिर्वारुणिः। **ब्रह्मणस्पतिः=जगदीश्वरः**॥ निचृद् गायत्री। षड्जः॥

**पुनः स किमर्थः प्रार्थनीय इत्युपदिश्यते॥**

फिर उस परमेश्वर से किस लिए प्रार्थना करनी चाहिए, इस विषय का उपदेश किया जाता है॥

मा नः शᳪंसो ऽ अररुषो धूर्तिः प्रणङ् मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ ३० ॥

**पदार्थः**—(**मा**) निषेधार्थे (**नः**) अस्माकम् ((**शंसः**) शंसंति=स्तुवन्ति यस्मिन्सः (**अररुषः**) राति-ददाति स ररिवान्, न ररिवानररिवान् तस्य (**धूर्तिः**) हिंसा (**प्रणक्**) प्रणश्यतु । **अत्र लोडर्थे लुङ् । मन्त्रेघसह्वरण० । इति च्लेर्लुक् च** (**मर्त्यस्य**) मनुष्यस्य । **मर्त्य इति मनुष्यनामसु पठितम् ॥ निघं० २ । ३ ॥** (**रक्ष**) पालय । **अत्र द्व्यचोतस्तिङ इति दीर्घः** (**नः**) अस्मान् (**ब्रह्मणस्पते**) जगदीश्वर । **षष्ठ्याः पति पुत्र० ॥ अ० ८ । ३ । ५३ ॥ इति विसर्जनीयस्य सकारादेशः ॥ अयं मंत्रः शत० २ । ३ । ४ । ३५ व्याख्यातः ॥ ३० ॥**

**प्रमाणार्थ**—(**प्रणक्**) प्रणश्यतु । यहां लोट् अर्थ में लुङ् लकार है । 'मन्त्र घसह्वर०' [**अ० २ । ४ । ८०**] सूत्र से 'च्लि' का लुक् है । (**मर्त्यस्य**) 'मर्त्य' शब्द निघं० (२ । ३) में मनुष्य नामों में पढ़ा है । (**रक्षा**) रक्ष । यहां 'द्व्यचोऽस्तिङः' [**अ० ६ । ३ । १३५**] से दीर्घ है । (**ब्रह्मणस्पते**) यहां 'षष्ठ्याः पतिपुत्र' (अ० ८ । ३ । ५३) सूत्र से विसर्ग को सकार हो गया है । इस मन्त्र की व्याख्या शत० (२ । ३ । ४ । ३५) में की गई है ॥ ३ । ३० ॥

**सपदार्थान्वयः**—हे **ब्रह्मणस्पते** ! जगदीश्वर ! **भवत्कृपया नः=अस्माकं शंसः** शंसन्ति=स्तुवन्ति यस्मिन् सः, **मा प्रणक्=कदाचिन्मा प्रणश्यतु** ।

**याऽरुषः=परस्वादायिनो** राति=ददाति स ररिवान् न ररिवान ररिवान् तस्य **मर्त्यस्य** मनुष्यस्य **धूर्तिः=हिंसास्ति, तस्याः सकाशान्नः=अस्मान् सततं रक्ष** पालय ॥ ३ । ३० ॥

**भाषार्थ**—हे (**ब्रह्मणस्पते**) जगदीश्वर ! आपकी कृपा से (**नः**) हमारी (**शंसः**) प्रशंसनीय कर्म (**मा प्रणक्**) कभी नष्ट न हों ।

जो (**अररुषः**) दूसरों के धन को लेने वाले (**मर्त्यस्य**) मनुष्य की (**धूर्तिः**) हिंसायुक्त धूर्तता है, उससे (**नः**) हमारी निरन्तर (**रक्ष**) रक्षा करो । ॥ ३ । ३० ॥

[हे ब्रह्मणस्पते ! भवत्कृपयाः नः=अस्माकं शंसोमा प्रणक्=कदाचिन्मा प्रणश्यतु]

**भावार्थः**—मनुष्यैः सदा प्रशंसनीयानि कर्माणि कर्त्तव्यानिः नेतराणि ।

**भावार्थ**—मनुष्य सदा प्रशंसनीय कर्म करें, निन्दित नहीं ।

[याऽररुषः=परस्वादायिनो मर्त्यस्य धूर्तिः=हिंसाऽस्ति तस्याः सकाशान्नः=अस्मान् सततं रक्ष]

कस्यचिद् द्रोहो दुष्टानां सङ्गश्च नैव कर्त्तव्यः ।

किसी से द्रोह और दुष्टों का सङ्ग न करें ।

[तात्पर्यमाह—]

धर्मस्य रक्षेश्वरोपासनं च सदैव कर्त्तव्यमिति ॥ ३ । ३० ॥

धर्म की रक्षा और ईश्वर की उपासना सदैव किया करें ॥ ३ । ३० ॥

**भा० पदार्थ**—शंसः=प्रशंसनीय कर्म । अररुषः= दुष्टस्य । धूर्तिः=द्रोहः ।

**भाष्यसार**—**ईश्वर प्रार्थना किस लिये**—ईश्वर प्रार्थना करने से हमारे प्रशंसनीय कर्म नष्ट नहीं होते, जो अदानशील, दूसरों का धन अपहरण करने वाले दुष्ट जन हैं, ईश्वर उनके सङ्ग से हमारी रक्षा करता है । परद्रोह आदि दोषों से बचाता है । धर्म की रक्षा और ईश्वरोपासना के लिये प्रेरणा मिलती है ॥ ३ । ३० ॥

सत्यधृतिर्वारुणिः । **आदित्यः**=ईश्वरः ॥ विराड्गायत्री । षड्जः ॥

**पुनः स किमर्थः प्रार्थनीय इत्युपदिश्यते ॥**

फिर उस परमेश्वर से किसलिये प्रार्थना करनी चाहिये इस विषय का उपदेश किया जाता है॥

**महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥ ३१ ॥**

**पदार्थः**—(**महि**) महत् (**त्रीणाम्**) त्रयाणां सकाशात् । अत्र वा छन्दसि सर्वे विधयो भवन्तीति त्रेस्त्रय इति त्रयादेशो न (**अवः**) रक्षणादिकम् (**अस्तु**) भवतु (**द्युक्षम्**) द्यौर्नीतिः प्रकाशः क्षियति=निवसति यस्मिंस्तत् (**मित्रस्य**) बाह्याभ्यन्तरस्थस्य प्राणस्य (**अर्यम्णः**) य ऋच्छति=नियच्छत्याकर्षणेन पृथिव्यादीन्स सूर्यलोकस्तस्य । श्वन्नुक्षन्पूषन० ॥ उ० १ । १५६ ॥ अनेनायं निपातितः (**दुराधर्षम्**) दुःखेनाधर्षितुं योग्यं दृढम (**वरुणस्य**) वायोर्जलस्य वा । वरुण इति पदनामसु पठितम् ॥ निघं० ५ । ४ ॥ अनेन प्राप्तिसाधनो गृह्यते ॥ अयं मन्त्रः शत० २ । ३ । ४ । ३७ व्याख्यातः ॥ ३१ ॥

**प्रमाणार्थ**—(**त्रीणाम्**) यहां वेद में सब विधियां विकल्प से होती हैं, इस नियम से 'त्रेस्त्रयः' [अ० ७ । १ । ५३] सूत्र से 'त्रि' को 'त्रय' आदेश नहीं है। (**अर्यम्णः**) 'अर्यमा' शब्द 'श्वन्नुक्षन्पूषन्०' उणा० ( १ । १५६ ) सूत्र से निपातन द्वारा सिद्ध है। (**वरुणस्य**) 'वरुण' शब्द निघं० ( ५ । ४ ) में पद-नामों में पढ़ा है। इस से प्राप्ति साधन अर्थ गृहीत होता है। इस मन्त्र की व्याख्या शत० ( २ । ३ । ४ । ३७ ) में की गई है ॥ ३ । ३१ ॥

**सपदार्थान्वयः**—हे **ब्रह्मणस्पते** ! **तव कृपया मित्रस्य** बाह्याभ्यन्तरस्थस्य प्राणस्य **अर्यम्णः** य ऋच्छति=नियच्छत्याकर्षणेन पृथिव्यादीन् स सूर्यलोकस्तस्य **वरुणस्य वायोर्जलस्य** वा **त्रीणां** त्रयाणां (सकाशात्) **सकाशात नः**=**अस्माकं द्युक्षं** द्यौर्नीतिः प्रकाशः क्षियति=निवसति यस्मिंस्तत् **दुराधर्षं** दुःखेनाधर्षितुं योग्यं दृढं [**महि**]=**महद् अवो** रक्षणादिकम् **अस्तु** भवतु ॥ ३ । ३१ ॥

**भाषार्थ**—हे (**ब्रह्मणस्पते**) जगदीश्वर ! आपकी कृपा से (**मित्रस्य**) बाहर और अन्दर विद्यमान प्राण (**अर्यम्णः**) आकर्षण के द्वारा पृथिवी आदि का नियमन करने वाला सूर्य (**वरुणस्य**) वायु वा जल इन (**त्रीणाम्**) तीनों से (**नः**) हमें (**द्युक्षम्**) नीति और प्रकार के निवास योग्य राज्य का (**दुराधर्षम्**) दृढ़ (**मही**) महान् (**अवः**) रक्षण आदि (**अस्तु**) प्राप्त हो ॥ ३ । ३१ ॥

[ अनुवृत्तिमाह— ]

**भावार्थः**—अत्र पूर्वस्मान्मन्त्राद् 'ब्रह्मणस्पते', 'नः' इति पदद्वयानुवृत्तिर्विज्ञेया ।

**भावार्थ**—यहां पूर्व मन्त्र से 'ब्रह्मणस्पते' और 'नः' इन दो पदों की अनुवृत्ति समझें।

[ हे ब्रह्मणस्पते ! तव कृपया मित्रस्यार्यम्णो वरुणस्य त्रीणां सकाशात्, नः=अस्माकं द्युक्षं···[महि] महदवोऽस्तु ]

मनुष्यैस्सर्वेभ्यः पदार्थेभ्यः स्वस्यान्येषां च न्यायेन रक्षणं कृत्वा राज्यपालनं कार्यमिति ॥ ३ । ३१ ॥

मनुष्य सब पदार्थों से अपनी और दूसरों की न्याय से रक्षा करके राज्य का पालन करें ॥ ३ । ३१ ॥

**भा० पदार्थः**—द्युक्षम्=राज्यम् ॥

**भाष्यसार**—**ईश्वर प्रार्थना किस लिये**—प्रार्थना करने से ईश्वर कृपा करके प्राण, **सूर्यलोक**, वरुण (**वायु वा जल**) इन तीनों से हमारे दृढ़ एवं महान् राज्य की रक्षा करता है।

सप्तधृतिर्वारुणिः । **आदित्यो**=ईश्वरः ॥ निचृद्गायत्री । षड्जः ॥

**पुनः स कीदृश इत्युपदिश्यते ॥**

फिर वह जगदीश्वर कैसा है, इस विषय का उपदेश किया जाता है ॥

**नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशंसः ॥ ३२ ॥**

**पदार्थः**—(नहि) निषेधार्थे (**तेषाम्**) परमेश्वरोपासकानां सूर्यप्रकाशस्थितानां वा (**अमा**) गृहेषु । अमेति गृहनामसु पठितम् ॥ निघं ३ । ४ ॥ (**चन**) अपि (न) निषेधार्थे (**अध्वसु**) मार्गेषु (**वारणेषु**) वारयन्ति यैर्युद्धैस्तेषु वा वारयन्ति ये चोरदस्युव्याघ्रादयो येषु तेषु (**ईशे**) समर्थो भवामि (**रिपुः**) शत्रुः (**अघशंसः**) योऽघानि=पापानि कर्माणि शंसति सः । अयं मंत्रः शत० २ । ३ । ४ । ३७ व्याख्यातः ॥ ३२ ॥

**प्रमाणार्थ**—(अमा) 'अमा' शब्द निघं० (३ । ४) में गृह नामों में पढ़ा है । इस मन्त्र की व्याख्या शत० (२ । ३ । ४ । ३७) में की गई है ॥ ३ । ३२ ॥

**सपदार्थान्वयः**—य ईश्वरोपासका**स्तेषां** परमेश्वरोपासकानां सूर्यप्रकाशस्थितानां वा **अमा=गृहेषु, अध्वसु** मार्गेषु **वारणेषु** वारयन्ति यैर्युद्धैस्तेषु, वा वारयन्ति ये चोरदस्युव्याघ्रादयो येषु तेषु **चन** अपि **अघशंसः** योऽघानि=पापानि कर्माणि शंसति स **रिपुः** शत्रुः **नह्युत्तिष्ठते=न खलु तान् क्लेशयितुं शक्नोति, तं तांश्चाहमीशे** समर्थो भवामि ॥ ३ । ३२ ॥

**भाषार्थ**—जो (**तेषाम्**) परमेश्वर के उपासक हैं, उनके वा सूर्य के प्रकाश में रहने वालों के (**अमा**) घरों में (**अध्वसु**) मार्गों में (**वारणेषु**) युद्धों में एवं चोर, डाकू व्याघ्र आदि के स्थान जङ्गलों में (**चन**) भी (**अघशंसः**) पाप कर्मों का प्रशंसक (**रिपुः**) शत्रु, उनको (**नहि**) क्लेश नहीं दे सकता, क्योंकि उस पापी का और उन ईश्वरोपासकों का मैं जगदीश्वर (**ईशे**) स्वामी हूँ ॥ ३ । ३२ ॥

[य ईश्वरोपासकास्तेषां···रिपुर्नह्युत्तिष्ठते=न खलु तान् क्लेशयितुं शक्नोति]

**भावार्थः**—ये धर्मात्मानः सर्वोपकारकाः सन्ति नैव क्वापि तेषां भयं भवति, येऽजातशत्रवो नैव तेषां कश्चिदपि शत्रुर्जायते ॥ ३ । ३२ ॥

**भावार्थ**—जो धर्मात्मा, सब का उपकार करने वाले मनुष्य हैं, उन्हें कहीं भी भय नहीं होता, जो अजातशत्रु मनुष्य हैं उनका कोई भी शत्रु नहीं होता ॥ ३ । ३२ ॥

**भाष्यसार**—**ईश्वर कैसा है**—जो ईश्वर की उपासना करने वाले, धर्मात्मा, सर्वोपकारी मनुष्य हैं, उन्हें ईश्वर घर, मार्ग, युद्ध, जङ्गल सभी स्थानों में निर्भय कर देता है । और जो सूर्य के प्रकाश में रहते हैं वे भी निर्भय होते हैं । अपने उपासकों को ईश्वर अजातशत्रु बना देता है । उन्हें कोई भी शत्रु दुःख नहीं दे सकता, क्योंकि ईश्वर उनको समर्थ बना देता है ॥ ३ । ३२ ॥

वारुणिः सप्तधृतिः । **आदित्याः**=**मित्रार्यमवरुणाः** ॥ विराड् गायत्री । षड्जः ॥

**आदित्यानां किं कर्मास्तीत्युपदिश्यते ॥**

आदित्यों के क्या-क्या कर्म हैं, इस विषय का उपदेश किया जाता है ॥

**ते हि पुत्रासो ऽ अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ॥ ३३ ॥**

**पदार्थः**—(ते) पूर्वोक्ताः (हि) निश्चये (पुत्रासः) मित्रार्यमवरुणाः (अदितेः) अखण्डितायाः कारणशक्तेः (प्र) प्रकृष्टार्थे (जीवसे) जीवितुम् (मर्त्याय) मनुष्याय (ज्योतिः) तेजः (यच्छन्ति) ददति (अजस्रम्) निरन्तरम् ॥ अयं मन्त्र शत० २ । ३ । ४ । ३७ व्याख्यातः ॥ ३३ ॥

**प्रमाणार्थ**—इस मन्त्र की व्याख्या शत० (२ । ३ । ४ । ३७) में की गई है ॥ ३ । ३३ ॥

**सपदार्थान्वयः**—ये ऽदितेः अखण्डितायाः कारणशक्तेः पुत्रासः=पुत्राः मित्रार्यमवरुणाः ते पूर्वोक्ता हि निश्चयेन मर्त्याय मनुष्याय जीवसे जीवितुम् अजस्रम् निरन्तरं ज्योतिः तेजः प्रयच्छन्ति प्रकृष्टं ददति ॥ ३ । ३३ ॥

**भाषार्थ**—जो (अदितेः) अखण्डित कारण शक्ति के (पुत्रासः) पुत्र, मित्र, अर्यमा, वरुण नामक हैं (ते) वे पूर्वोक्त (हि) निश्चय से (मर्त्याय) मनुष्य के (जीवसे) जीने के लिये (अजस्रम्) निरन्तर (ज्योतिः) तेज को (प्रयच्छन्ति) उत्तम रीति से प्रदान करते हैं ॥ ३ । ३३ ॥

[येऽदितेः पुत्रासः=पुत्रास्ते हि मर्त्याय जीवसेऽजस्रं ज्योतिः प्रयच्छन्ति]

**भावार्थः**—एते कारणादुत्पन्नाः प्राणवाय्वादयो नित्यं ज्योतिः प्रयच्छन्तः सर्वेषां जीवनाय मरणाय वा निमित्तानि भवन्तीति ॥ ३ । ३३ ॥

**भावार्थ**—ये कारण से उत्पन्न हुये प्राण-वायु आदि सदा ज्योति प्रदान करते हुये सब के जीवन वा मरण के लिये निमित्त होते हैं ॥ ३ । ३३ ॥

**भाष्यसार**—**आदित्यों का कर्म**—मित्र=प्राण, अर्यमा=सूर्य, वरुण=वायु वा जल ये कारण रूप प्रकृति से उत्पन्न होने से अदिति (**प्रकृति**) के पुत्र कहाते हैं। अखण्डित (**अविनाशी**) होने से प्रकृति का नाम अदिति है। ये प्राण आदि सब के जीवन के लिये ज्योति प्रदान करते हैं। सबके जीवन और मरण का निमित्त भी यही है ॥ ३ । ३३ ॥

मधुच्छन्दाः । **इन्द्रः**=ईश्वरः ॥ पथ्या बृहती । मध्यमः ॥

**स इन्द्रः कीदृश इत्युपदिश्यते ॥**

वह इन्द्र कैसा है, इस विषय का उपदेश किया जाता है ॥

**कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।**
**उपोपेन्नु मघवन् भूयऽइन्नु ते दानं देवस्य पृच्यते ॥ ३४ ॥**

**पदार्थः**—(कदा) कस्मिन् काले (चन) आकांक्षायाम् (स्तरीः) यः सुखैः स्तृणात्याच्छादयति सः । अत्र अवितृ० ॥ उ० ३ । १५८ ॥ इति ईः प्रत्ययः (असि) भवसि (न) निषेधार्थे (इन्द्र) सुखप्रदेश्वर (सश्चसि) जानासि प्रापयसि वा । सश्चतीति गतिकर्मसु पठितम् ॥ निघं० २ । १४ ॥ (दाशुषे) विद्यादिदानकर्त्रे (उपोप) सामीप्ये (इत्) एति=जानात्यनेन तदिज्ज्ञानम् (नु) क्षिप्रम् । न्विति क्षिप्रनामसु पठितम् ॥ निघं० २ । १५ ॥ (मघवन्) परमधनवन् (भूयः) पुनः (इत्) एव (नु) क्षिप्रे (ते) तव (दानम्) दीयमानम् (देवस्य) कर्मफलप्रदातुः (पृच्यते) संबध्यते ॥ अयं मंत्रः शत० २ । ३ । ४ । ३८ व्याख्यातः ॥ ३४ ॥

**प्रमाणार्थ**—(स्तरीः) 'स्तरी' शब्द आच्छादन अर्थ वाली 'स्तृ' धातु से 'अवितृ०' उ० (३ । १५८) सूत्र से 'ई' प्रत्यय करने पर सिद्ध होता है। (सश्चसि) 'सश्चति' शब्द निघं० (२ । १४) में

गत्यर्थक धातुओं में पढ़ा है। (नु) 'नु' शब्द निघं० (२। १५) में क्षिप्र-नामों में पढ़ा है। इस मन्त्र की व्याख्या शत० (२। ३। ४। ३८) में की गई है ॥ ३। ३४॥

**सपदार्थान्वयः**—हे इन्द्र! सुखप्रदेश्वर! यदा त्वं **स्तरीः** यः सुखैः स्तृणात्याच्छादयति स **असि** भवसि, **तदा दाशुषे** विद्यादिदानकर्त्रे **कदा** कस्मिन् काले **चन इत्** अपि एतिजानात्यनेन तदिज्ज्ञानं **नु** क्षिप्रं **न सश्चसि** न जानासि प्रापयसि वा।

**भाषार्थ**—हे (**इन्द्र**) सुखदाता ईश्वर! जब आप (**स्तरीः**) सब सुखों से अच्छादित करने वाले (**असि**) हो, तब (**दाशुषे**) विद्या आदि के दान करने वाले के लिये (**कदाचन**) कब (**इत्**) ज्ञान को (**नु**) शीघ्रता से (**न सश्चसि**) नहीं प्राप्त कराते हो?

तदा हे **मघवन्**! परमधनवन्! **देवस्य** कर्मफलप्रदातुः **ते**=**तव दानं** दीयमानं तस्मै **दाशुषे** विद्यादिदानकर्त्रे **भूयः** पुनः **कदा** कस्मिन् काले **चन** अपि **इत्** एव नु क्षिप्रं **नोपोपपृच्यते** समीपं न सम्बध्यते?॥ ३। ३४॥

तब हे (**मघवन्**) परम धनवान्! (**देवस्य**) कर्म का फल देने वाले (**ते**) आपका (**दानम्**) दान उस (**दाशुषे**) विद्या आदि का दान करने वाले के लिये (**भूयः**) फिर (**कदाचन**) किस काल में (**इत्**) ही (**नु**) शीघ्रता से (**नोपोपपृच्यते**) उप सम्बन्ध नहीं होता है?॥ ३। ३४॥

[हे मघवन्! देवस्य ते=तव दानं दाशुषे भूयः कदा चनेन्नु नोपपृच्यते?]

**भावार्थः**—यदीश्वरः कर्मफलदाता न स्यात्तर्हि न कश्चिदपि जीवो व्यवस्थया कर्मफलं प्राप्नुयादिति ॥ ३। ३४॥

**भावार्थ**—यदि ईश्वर कर्म फलों का दाता न हो तो कोई भी जीव व्यवस्थापूर्वक कर्म-फल को प्राप्त नहीं कर सकता ॥ ३। ३४॥

**भाष्यसार**—**इन्द्र कैसा है**—सुखों का दाता इन्द्र सब सुखों से आच्छादित करने वाला है, विद्या आदि का दान करने वाले मनुष्य को वह कब ज्ञान-प्रदान नहीं करता? अर्थात् सदा ही ज्ञान देता रहता है। इन्द्र परम धनवान् और कर्म फल का दाता है। इन्द्र विद्या आदि का दान करने वाले मनुष्य को उत्तम कर्म-फल शीघ्र प्रदान करता है ॥ ३। ३४॥

विश्वामित्रः। **सविता**=ईश्वरः॥ निचृद्गायत्रीः। षड्जः॥

**तस्य जगदीश्वरस्य कीदृश्यः स्तुतिप्रार्थनोपासनाः कार्या इत्युपदिश्यते ॥**

उस जगदीश्वर की कैसी स्तुति प्रार्थना और उपासना करनी चाहिये, इस विषय का उपदेश किया जाता है॥

तत् स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि। धियो॒ यो नः॑ प्रचो॒दया॑त् ॥ ३५ ॥

**पदार्थः**—(**तत्**) वक्ष्यमाणम् (**सवितुः**) सर्वस्य जगतः प्रसवितुः। **सविता वै देवानां प्रसविता तथो हास्माऽएते सवितृप्रसूता एव सर्वे कामाः समृध्यन्ते ॥ शत० २। ३। ४। ३६ ॥** (**वरेण्यम्**) अतिश्रेष्ठम्। **अत्र वृञ एण्यः ॥ उ० ३। ९८ ॥ अनेन वृञ्धातोरेण्यप्रत्ययः** (**भर्गः**) भृज्जन्ति पापानि=दुःखमूलानि येन तत्। **अन्च्यज्जियुजि० ॥ उ० ४। २१६ ॥ इति भ्रस्जधातोरसुन्प्रत्ययः कवर्गादेशश्च** (**देवस्य**) प्रकाशमयस्य शुद्धस्य सर्वसुखप्रदातुः परमेश्वरस्य (**धीमहि**) दधीमहि। **अत्र डुधाञ्धातोः प्रार्थनायां लिङ् छन्दस्युभयथेत्यार्धधातुकत्वाच्छब् न। आतो लोप इटि चेत्याकारलोपश्च।** (**धियः**) प्रज्ञा बुद्धिः। **धीरिति प्रज्ञानामसु पठितम् ॥ निघं ३। ९ ॥**

(यः) सविता देवः परमेश्वरः (नः) अस्माकम् (प्र) प्रकृष्टार्थे (चोदयात्) प्रेरयेत् ॥ अयं मन्त्रः शत० २ । ३ । ४ । ३९ व्याख्यातः ॥ ३५ ॥

**प्रमाणार्थ**—(सवितुः) शत० (२ । ३ । ४ । ३९) में 'सविता' शब्द का अर्थ "देवों का उत्पन्न करने वाला है क्योंकि उस सविता देव से उत्पन्न ये सभी कामनाएँ इस यजमान के लिए समृद्ध होती हैं" (वरेण्यम्) 'वरेण्य' शब्द 'वृञ एण्यः' उणा० (३ । ९८) से 'वृञ्' धातु से 'एण्य' प्रत्यय करने पर सिद्ध होता है । (भर्गः) 'भर्गः' शब्द 'अञ्च्यञ्जियुजि०' उणा० (४ । २१६) से 'भ्रस्ज' धातु से 'असुन' प्रत्यय और कवर्ग आदेश करने पर सिद्ध होता है । (धीमहि) यहां 'डुधाञ्' धातु से प्रार्थना अर्थ में लिङ् लकार है, 'छन्दस्युभयथा' अष्टा० [३ । ४ । ११७] सूत्र से आर्धधातुक संज्ञा होने से 'शप्' नहीं हुआ । 'आतो लोप इटि च' अष्टा [६ । ४ । ६४] सूत्र से आकार का लोप है । (धियः) 'धी' शब्द निघं० (३ । ९) में प्रज्ञा-नामों में पढ़ा है । इस मन्त्र की व्याख्या शत० (२ । ३ । ४ । ३९) में की गई है ॥ ३ । ३५ ॥

**सपदार्थान्वयः**—वयं सवितुः सर्वस्य जगतः प्रसवितुः **देवस्य=परमेश्वरस्य** प्रकाशमयस्य शुद्धस्य सर्वसुखप्रदातुः परमेश्वरस्य **यद् वरेण्यम्** अतिश्रेष्ठं **भर्गः** भुज्जन्ति पापानिदुःखमूलानि येन तत् **स्वरूपमस्ति तद् धीमहि** दधीमहि ।

**भाषार्थ**—हम लोग (**सवितुः**) सब जगत् के उत्पत्ति कर्त्ता (**देवस्य**) प्रकाशमय, शुद्धस्वरूप, सब सुख दाता परमेश्वर का जो (**वरेण्यम्**) अति श्रेष्ठ (**भर्गः**) दुःखमूलक पापों को भस्म करने वाला स्वरूप है (**तत्**) उसे (**धीमहि**) धारण करें ।

**यः=सविता देवोऽन्तर्यामी परमेश्वरः नः=अस्माकं धियः** प्रज्ञाः बुद्धीः **प्रचोदयात्=प्रेरयेत** प्रकृष्टं प्रेरयेत् ॥ ३ । ३५ ॥

(**यः**) जो सविता देव अर्थात् अन्तर्यामी परमेश्वर है वह (**नः**) हमारी (**धियः**) प्रज्ञा एवं बुद्धियों को (**प्रचोदयात्**) शुभ कर्मों में प्रेरित करे ॥ ३ । ३५ ॥

[वयं सवितुर्देवस्य=परमेश्वरस्य यद् वरेण्यं भर्गः स्वरूपमस्ति तद् धीमहि]

**भावार्थः**—मनुष्यैः सकलजगदुत्पादकस्य सर्वोत्कृष्टस्य सकलदोषनाशकस्य शुद्धस्य परमेश्वरस्यैवोपासना नित्यं कार्या, कस्मै प्रयोजनायेत्यत्राह—

**भावार्थ**—मनुष्य, सकल जगत् के उत्पत्ति-कर्त्ता, सबसे उत्तम, सब दोषों को नष्ट करने वाले, शुद्ध स्वरूप, परमेश्वर की उपासना नित्य करें । किस प्रयोजन के लिए ? इसके उत्तर में वेद कहता है :—

[यः...नः= अस्माकं धियः प्रचोदयात्=प्रेरयेत्]

स स्तुतो, धारितः, प्रार्थितः, उपासितः सन्नस्मान् सर्वेभ्यो दुष्टगुणकर्मस्वभावेभ्यः पृथक्कृत्य सर्वेषु गुणकर्मस्वभावेषु नित्यं प्रवर्त्तयेदित्यस्मै ।

स्तुति, धारणा, प्रार्थना और उपासना किया हुआ वह परमेश्वर हमें सब दुष्ट गुण, कर्म, स्वभावों से पृथक् करके सब श्रेष्ठ गुण, कर्म, स्वभावों में सदा प्रवृत्त रखे, इसलिए परमेश्वर की स्तुति आदि करना योग्य है ।

[प्रार्थनासिद्धान्तमाह—]

अयमेव प्रार्थनाया मुख्यः सिद्धान्तः—यादृशीं

प्रार्थना का यही मुख्य सिद्धान्त है कि जैसी

प्रार्थनां कुर्यात् तादृशमेव कर्माचरेदिति ॥ ३ । ३५ ॥ प्रार्थना करें वैसा ही कर्म (**आचरण**) भी करें । ॥ ३ । ३५ ॥

**भा० पदार्थः**—सवितुः=सकलजगदुत्पादकस्य । वरेण्यम्=सर्वोत्कृष्टम् । भर्गः=सकलदोषनाशकम् । प्रचोदयात्=नित्यं प्रवर्त्तयेत् ॥

**अन्यत्र व्याख्यात**=महर्षि ने इस मन्त्र का विनियोग संस्कारविधि (**वेदारम्भ प्रकरण**) में आचार्य के द्वारा भात की आहुति देने में किया है ॥

**भाष्यसार**—१. **ईश्वर की स्तुति**—ईश्वर सब जगत् का उत्पादक, प्रकाशमय, शुद्धस्वरूप, सब सुखों का दाता, अतिश्रेष्ठ, और सब पापों को नष्ट करने वाला है ।

२. **ईश्वर प्रार्थना**—अन्तर्यामी परमेश्वर हमारी बुद्धियों को सब दुष्ट गुण, कर्म, स्वभावों से पृथक् करके सर्वश्रेष्ठ गुण, कर्म स्वभावों में प्रवृत करें ।

३. **ईश्वर-उपासना**—ईश्वर के सर्वोत्कृष्ट, सकल दोषनाशक, शुद्ध स्वरूप को हम धारण करें, उसकी नित्य उपासना करें ॥ ३ । ३५ ॥

●

वामदेवः । **अग्निः**=**ईश्वरः** ॥ निचृद्गायत्री । षड्जः ॥

**स जगदीश्वरः कीदृश इत्युपदिश्यते ॥**

वह परमेश्वर कैसा है, इस विषय का उपदेश किया जाता है ॥

परि ते दूडभो रथोऽस्माँ२ऽअश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥ ३६ ॥

**पदार्थः**—(**परि**) सर्वतः (**ते**) तव व्यापकेश्वरस्य (**दूडभः**) दुखेन दम्भितुं=हिंसितुं योग्यः । अत्र दंभुधातोः खल् प्रत्ययः । दुरो दाशनाशदभध्येषु ऊत्वं वक्तव्यमुत्तरपदादेश्च ष्टुत्वम् ॥ अ० ६ । ३ । १०९ ॥ एतत्सूत्रभाष्योक्तवार्त्तिकेन नकारलोपेन चास्य सिद्धिः (**रथः**)रयते=जानाति येन स रथः । रथो रंहतेर्गतिकर्मणः स्थिरतेर्वा स्याद्विपरीतस्य रममाणोऽस्मिंस्तिष्ठतीति वा रपतेर्वारसतेर्वा ॥ नि० ९ । ११ ॥ (**अस्मान्**) भवदाज्ञासेवकान् (**अश्नोतु**) अश्नुताम्=व्याप्नोतु । अत्र व्यत्ययेन परस्मैपदम् (**विश्वतः**) सर्वतः (**येन**) ज्ञानेन (**रक्षसि**) पालयसि (**दाशुषः**) विद्यादिदानकर्तॄन् ॥ अयं मंत्रः शत० २ । ३ । ४ । ४०–४१ । व्याख्यातः ॥ ३६ ॥

**प्रमाणार्थ**—(**दूडभः**) यहां 'दम्भु' धातु से 'खल्' प्रत्यय है । 'दुरो दाशनाश दभध्येषु ऊत्वं वक्तव्यमुत्तरपदादेश्च ष्टुत्वम्' अष्टा० (६ । ३ । १०९) इस भाष्योक्तवार्त्तिक से नकार लोप होने से इस शब्द की सिद्धि समझनी चाहिए । (**रथः**) 'रथ' शब्द की व्याख्या निरु० ( ९ । ११ ) में इस प्रकार की गई है—गत्यर्थक 'रंह्' धातु से रथ शब्द बनता है, अथवा 'स्थिर' शब्द का वर्णविपर्य करने से यह शब्द सिद्ध होता है, अथवा इस पर रमणीय व्यक्ति ही बैठता है, इसलिये इसे रथ कहते हैं, अथवा 'रप्' या 'रस' धातु से 'रथ' शब्द की सिद्धि जाननी चाहिए । (**अश्नोतु**) अश्नुताम् । यहां व्यत्यय से परस्मैपद है । इस मन्त्र को व्याख्या शत० ( २ । ३ । ४ । ४०–४१ ) में की गई है ॥ ३ । ३६ ॥

**सपदार्थान्वयः**—**हे जगदीश्वर ! त्वं येन=रथेन** ज्ञानेन दाशुषः विद्यादिदानकर्तॄन् **विश्वतः** सर्वतः **रक्षसि** पालयसि ।

**भाषार्थ**—हे जगदीश्वर ! आप (**येन**) जिस रथ अर्थात् ज्ञान से (**दाशुषः**) विद्या आदि के दान करने वालों की (**विश्वतः**) सब ओर से

(रक्षसि) पालना करते हो।

**स ते**=**तव** (तव) व्यापकेश्वरस्य **दूडभः** दुःखेन दम्भितुं=हिंसितुं योग्यः **रथः**=**विज्ञानं** रयते= जानाति येन स रथः **विश्वतः** सर्वतः **रक्षितुमस्मान्** भवदाज्ञा सेवकान् **पर्यश्नोतु**=**सर्वतः प्राप्नोतु** सर्वत अश्नुतां=व्याप्नोतु ॥ ३ । ३६ ॥

वह (ते) आप व्यापक ईश्वर का (**दूडभः**) सुदृढ़ (**रथः**) विज्ञान (**विश्वतः**) सब ओर से रक्षा करने के लिए हम आपके आज्ञा-पालकों को (**पर्यश्नोतु**) सब ओर से प्राप्त हो ॥ ३ । ३६ ॥

**[हे जगदीश्वर ! त्वं येन रथेन दाशुषो विश्वतो रक्षसि, स ते=तव···रथो=विज्ञानं विश्वतो रक्षितुमस्मान् पर्यश्नोतु=सर्वतः प्राप्नोतु]**

**भावार्थः**—मनुष्यैः सर्वाभिरक्षकस्य परमेश्वरस्य विज्ञानस्य च प्राप्तये प्रार्थना पुरुषार्थौ नित्यं कर्त्तव्यौ, यतो रक्षिताः सन्तो वयमसद्विद्याऽधर्मादिदोषाँस्त्यक्त्वा सद्विद्याधर्मादिशुभगुणान् प्राप्य सदा सुखिनः स्यामेति ॥ ३ । ३६ ॥

**भावार्थ**—मनुष्य, सबके रक्षक परमेश्वर की और विज्ञान की प्राप्ति के लिये ईश्वर-प्रार्थना और पुरुषार्थ नित्य करें, जिससे रक्षा को प्राप्त हुए हम लोग असद्-विद्या और अधर्म आदि दोषों को छोड़कर सद्-विद्या और धर्म आदि शुभ गुणों को प्राप्त करके सदा सुखी रहें ॥ ३ । ३६ ॥

**भाष्यसार**—**ईश्वर कैसा है**—जगदीश्वर सबका रक्षक है, जो अपने विज्ञान से विद्यादि शुभ गुणों के दाता जनों की सब ओर से रक्षा करता है। उस व्यापक ईश्वर का विज्ञान ऐसा है कि उसे कोई दबा नहीं सकता, नष्ट नहीं कर सकता किन्तु वह विज्ञान उसके आज्ञापालक, प्रार्थी एवं पुरुषार्थी जनों को ही प्राप्त होता है ॥ ३ । ३६ ॥

वामदेव । **प्रजापतिः**=ईश्वरः । ब्राह्म्युष्णिक् । ऋषभः ॥

**पुनः स जगदीश्वरः किमर्थः प्रार्थनीय इत्युपदिश्यते ॥**

फिर उस जगदीश्वर की प्रार्थना किसलिए करनी चाहिये, इस विषय का उपदेश किया जाता है ॥

**भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याꣳ सुवीरो वीरैः सुपोषः पोषैः ।**
**नर्य्य प्रजां मे पाहि शꣳस्य पशून् मे पाह्यथर्य्य पितुं मे पाहि ॥ ३७ ॥**

**पदार्थः**—(**भूः**) प्रियस्वरूपः प्राणः (**भुवः**) बलनिमित्त उदानः (**स्वः**) सर्वचेष्टानिमित्तो व्यानश्च तैः सह (**सुप्रजाः**) शोभना सुशिक्षा सद्विद्यासहिता प्रजा यस्य सः (**प्रजाभिः**) अनुकूलाभिः स्त्र्यौरसविद्यासन्तानमित्रभृत्यराज्यपश्वादिभिः (**स्याम्**) भवेयम् (**सुवीरः**) शोभना वीराः=शरीरात्मबलसहिता यस्य सः (**वीरैः**) शौर्यधैर्यविद्याशत्रुनिवारणप्रजापालनकुशलैः (**सुपोषः**) श्रेष्ठाः पोषाः=पुष्टयो यस्य सः (**पोषैः**) पुष्टिकारकैराप्तविद्याजनितैर्बोधयुक्तैर्व्यवहारैः (**नर्य**) नीतियुक्तेषु नृषु साधु-स्तत्सम्बद्धौ परमेश्वर ! (**प्रजाम्**) सन्तानादिकाम् (**मे**) मम (**पाहि**) सततं रक्ष (**शंस्य**) शंसितुं=सर्वथा स्तोतुमर्ह (**पशून्**) गोऽश्वहस्त्यादीन् (**मे**) मम (**पाहि**) रक्षय (**अथर्य**) संशयरहित । **थर्वतिश्चरतिकर्म्मा ॥ निरु० ११ । १८ ॥** थर्वति=संशेते यः स थर्य्यो न थर्य्योऽथर्यस्तत्सम्बुद्धौ । **अत्र वर्णव्यत्ययेन वकारस्थाने यकारः** (**पितुम्**) अन्नम् । **पितुरित्यन्ननामसु पठितम् ॥ निघं० २ । ७ ॥** (**मे**) **मम** (**पाहि**) रक्ष । **अत्रोभयंत्रान्तर्गतोण्यर्थः । अयं**

मंत्रः शत० २ । ४ । १ । १—६ व्याख्यातः ॥ ३७ ॥

**प्रमाणार्थ**—(**अथर्य**) निरु० (११ । १८) में 'थर्वति' क्रिया 'चरति' अर्थ में है। यहां वर्ण-व्यत्यय से वकार के स्थान में यकार है। (**पितुम्**) 'पितु' शब्द निघं० (२ । ७) में अन्न-नामों में पढ़ा है। (**पाहि**) यहां दोनों स्थानों में अन्तर्भावितण्यर्थ है। इस मन्त्र की व्याख्या शत० (२ । ४ । १ । १–६) में की गई है ॥ ३ । ३७ ॥

**सपदार्थान्वयः**—हे **नर्य्य** ! नीति युक्तेषु नृषु साधुस्तत्सम्बुद्धौ परमेश्वर ! **त्वं कृपया मे**=**मम प्रजां** सन्तानादिकां **पाहि** सततं रक्ष ।

**मे**=**मम पशून्** गोऽश्वहस्त्यादीन् **पाहि** रक्षय ।

हे **अथर्य** ! संशय रहित, थर्वति=संशेते यः स थर्य्यो न थर्य्योऽथर्यस्तत्सम्बुद्धौ ! **मे**=**मम पितुम्** अन्नं **पाहि** रक्ष ।

हे **शंस्य**=**जगदीश्वर** ! शंसितुं सर्वथा स्तोतुमर्ह ! भवत्कृपयाहं **भूर्भुवः स्वः**=**प्राणापान-व्यानैर्युक्तः सन्** [**भूः**] प्रियस्वरूपः प्राणः, [**भुवः**] बलनिमित्त उदानः [**स्वः**] सर्वचेष्टानिमित्तो व्यानश्च तैः सह **प्रजाभिः** अनुकूलाभिः स्त्र्यौरसविद्यासन्तान-मित्रभृत्यराज्यपश्वादिभिः **सुप्रजाः** शोभना सुशिक्षा-सद्विद्यासहिता प्रजा यस्य सः **वीरैः** शौर्यधैर्यविद्या शत्रुनिवारणप्रजापालनकुशलैः **सुवीरः** शोभना वीराः=शरीरात्मबल सहिता यस्य सः **पोषैः** पुष्टि-कारकैराप्तविद्याजनितैर्बोधयुक्तैर्व्यवहारैः **सह च सुपोषः** श्रेष्ठाः पोषाः=पुष्टयो यस्य सः **स्याम्**= नित्यं भवेयम् ॥ ३ । ३७ ॥

**भाषार्थ**—हे (**नर्य्य** !) नीतिमान् नरों में श्रेष्ठ परमेश्वर ! आप कृपा करके (**मे**) मेरी (**प्रजाम्**) सन्तान आदि की (**पाहि**) सदा रक्षा करो।

और (**मे**) मेरे (**पशून्**) गाय, घोड़े, हाथी आदि पशुओं की भी (**पाहि**) रक्षा करो।

हे (**अथर्य**) संशय रहित परमेश्वर ! आप (**मे**) मेरे (**पितुम्**) अन्न की (**रक्ष**) रक्षा करो।

हे (**शंस्य**) सर्वथा स्तुति करने योग्य जगदीश्वर ! आपकी कृपा से मैं [**भूः**] प्रिय स्वरूप प्राण [**भुवः**] बल निमित्त उदान [**स्व**] सब चेष्टाओं के निमित्त व्यान इन प्राण अपान व्यानों से युक्त होकर (**प्रजाभिः**) अनुकूल रहने वाले स्त्री, पुत्र, शिष्य, मित्र, सेवक, राज्य, पशु आदि से (**सुप्रजाः**) उत्तम शिक्षा तथा श्रेष्ठ विद्या से युक्त प्रजा वाला, (**वीरैः**) शौर्य, धैर्य तथा विद्या से विभूषित एवं शत्रु निवारण तथा प्रजापालन में कुशल (**सुवीरः**) शरीर और आत्मा के बलों से युक्त श्रेष्ठ वीरों वाला (**पोषैः**) पुष्टिकारक, आप्त विद्या से उत्पन्न ज्ञान युक्त व्यवहारों से (**सुपोषः**) श्रेष्ठ पुष्टियों वाला (**स्याम्**) सदा रहूँ ॥ ३ । ३७ ॥

[हे **शंस्य**=**जगदीश्वर** ! भवत्कृपयाऽहं ⋯ **प्रजाभिः सुप्रजाः**, **वीरैः सुवीरः**, **पोषैः सह च सुपोषः स्यां**=**नित्यं भवेयम्**]

**भावार्थः**— मनुष्यैरीश्वरोपासनाज्ञापालन माश्रित्य सुनियमैः पुरुषार्थेन श्रेष्ठप्रजावीरपुष्ट्या-दिकारणैः प्रजापालनं कृत्वा नित्यं सुखं सम्पाद-नीयम् ॥ ३ । ३७ ॥

**भावार्थ**—मनुष्य, ईश्वरोपासना तथा ईश्वर की आज्ञापालन के आश्रय से उत्तम नियमों एवं पुरुषार्थ के द्वारा श्रेष्ठ प्रजा, वीर पुरुष तथा पुष्टि आदि कारणों से प्रजा का पालन करके नित्य सुख को सिद्ध करें ॥ ३ । ३७ ॥

**अन्यत्र व्याख्यात**—महर्षि ने इस मन्त्र की व्याख्या संस्कारविधि (**गृहाश्रम प्रकरण**) में इस प्रकार की है—"हे स्त्री वा पुरुष मैं तेरा वा अपने के सम्बन्ध से (**भूर्भुवः, स्वः**) शारीरिक वाचिक और मानस अर्थात् त्रिविध सुख से युक्त हो के (**प्रजाभिः**) मनुष्यादि उत्तम प्रजाओं के साथ (**सुप्रजाः**)

उत्तम प्रजा युक्त (**स्याम्**) होऊँ (**वीरैः**) उत्तम पुत्र बन्धु सम्बन्धी और भृत्यों से सह वर्त्तमान (**सुवीरः**) उत्तम वीरों से सहित होऊँ (**पोषैः**) उत्तम पुष्टिकारक व्यवहारों से (**सुपोषः**) उत्तम पुष्टि युक्त होऊँ हे (**नर्य**) मनुष्यों में सज्जन वीर स्वामिन् (**मे**) मेरी (**प्रजाम्**) प्रजा की (**पाहि**) रक्षा कीजिये। हे (**शंस्य**) प्रशंसा करने योग्य स्वामिन् आप (**मे**) मेरे (**पशून्**) पशुओं की (**पाहि**) रक्षा कीजिये। वैसे हे नारि प्रशंसनीय गुणयुक्त तू मेरी प्रजा, मेरे पशु और मेरे अन्न की सदा रक्षा किया कर'' ॥ २ ॥

महर्षि ने इस मन्त्र की व्याख्या आर्याभिविनय (२ । ३५) में इस प्रकार की है--हे सर्वमङ्गलकारकेश्वर ! आप "भूः" सदा वर्त्तमान हो। "भुवः" वायु आदि पदार्थों के रचने वाले "स्वः" सुख रूप हो, हम को सुख दीजिए। हे सर्वाध्यक्ष ! आप कृपा करो जिससे कि मैं पुत्र पौत्र आदि उत्तम गुण वाली प्रजा से श्रेष्ठ प्रजा वाला होऊँ, सर्वोत्कृष्ट वीर योद्धाओं से "सुवीरः" युद्ध में सदा विजयी होऊँ। हे महापुष्टि प्रद ! आप के अनुग्रह से अत्यन्त विद्यादि तथा सोमलता आदि औषधि सुवर्णादि और नैरोग्यादि सर्वपुष्टियुक्त होऊँ। हे "नर्य" नरों के हितकारक मेरी प्रजा की रक्षा आप करो। हे "शंस्य" स्तुति करने योग्य ईश्वर ! हस्त्यश्वादि पशुओं का पालन करो। हे "अथर्य" व्यापक ईश्वर ! "पितुम्" धरे अन्न की रक्षा कर। हे दयानिधे ! हम लोगों को सब उत्तम पदार्थों से परिपूर्ण और सब दिन आप आनन्द में रखो" ॥ २ । ३५ ॥

**भाष्यसार**—१. **ईश्वर प्रार्थना किस लिये**—प्रार्थना करने से जगदीश्वर कृपा करके हमारी सन्तान आदि प्रजा की, गौ, घोड़ा, हाथी आदि पशुओं की और अन्न की रक्षा करता है। वह प्राण, अपान और उदान से युक्त करके अनुकूल स्त्री, औरस सन्तान, विद्या सन्तान, मित्र, भृत्य, राज्य, पशु आदि प्रजा से उत्तम विद्या शिक्षा से युक्त प्रजावान् बनाता है। वह शौर्य, धैर्य, विद्या, शत्रुनिवारण और प्रजापालन में कुशल वीरों से हमें शारीरिक—आत्मिक बल से भरपूर वीरवान् बनाता है। वही आप्त विद्या से उत्पन्न होने वाले ज्ञानयुक्त पुष्टिकारक व्यवहारों से हमें अत्यन्त पुष्ट करता है।

यह सब सुख ईश्वर की प्रार्थना के साथ उपासना, आज्ञापालन, उत्तम नियमों का आचरण, एवं पुरुषार्थ से ही सम्भव है ॥

२. **ईश्वर**—जगदीश्वर नीतिमानों में श्रेष्ठ, संशयरहित, और सर्वथा स्तुति के योग्य है ॥ ३ । ३७ ॥

आसुरिः । **अग्निः**=**ईश्वर और भौतिक अग्नि**। अनुष्टुप् । गान्धारः ॥

**अथाग्निशब्देनेश्वरभौतिकावर्थावुपदिश्येते** ॥

अब अग्नि शब्द से ईश्वर और भौतिक अग्नि का उपदेश किया जाता है ॥

**आग॑न्म वि॒श्ववे॑दसम॒स्मभ्यं॑ वसुवि॒त्त॑मम् । अग्ने॑ सम्राड॒भि द्यु॒म्नम॒भि सह॒ ऽ आय॑च्छस्व ॥** ३८ ॥

**पदार्थः**—(**आ**) समन्तात् (**अगन्म**) प्राप्नुयाम। **अत्र लिङर्थे लुङ् मन्त्रे घसह्वर० इति च्लेर्लुक्। म्वोश्च ॥** अ० ८ । २ । ६५ ॥ **इति मकारस्य नकारः** (**विश्ववेदसम्**) यो विश्वं वेत्ति स विश्ववेदाः परमेश्वरः। विश्वं=सर्वं सुखं वेदयति=प्रापयति स भौतिकोऽग्निर्वा। **अत्र विदिभुजिभ्यां विश्वे ॥** उ० ४ । २३८ ॥ **अनेनासिः** प्रत्ययः (**अस्मभ्यम्**) उपासकेभ्यो यज्ञानुष्ठातृभ्यो वा (**वसुवित्तमम्**) वसून्पृथिव्यादिलोकान्वेत्ति सोतिशयितस्यग। पृथिव्यादिलोकान् वेदयति=सूर्यरूपेणाग्निरेतान्प्रकाश्य प्रापयति स वसुवित् अतिशयेन वसुविदिति वसुवित्तमो वा तम् (**अग्ने**) विज्ञानस्वरूपेश्वर। विज्ञापको भौतिको वा (**सम्राट्**) यः सम्य-

ग्राजते=प्रकाशते सः (अभि) आभिमुख्ये (द्युम्नम्) प्रकाशकारकमुत्तमं यशः । **द्युम्नं द्योततेर्यशो वान्नं वा ॥ नि० ५ । ५ ॥** (अभि) आभिमुख्ये (सहः) उत्तमं बलम् । **सह इति बलनामसु पठितम् ॥ निघं० २ । ६ ॥** (आ) समन्तात् (यच्छस्व) विस्तारय विस्तारयति वा । **अत्र पक्षे लडर्थे लोट् । आङो यमहनः ॥ अ० १ । ३ । २८ ॥ अनेनात्मनेपदम् । आङ्पूर्वको यमधातुर्विस्तारार्थे ॥ अयं मंत्रः शत० २ । ४ । १ । ७-८ व्याख्यातः ॥ ३८ ॥**

**प्रमाणार्थ**—(अगन्म) यहां लिङ् अर्थ में लुङ् लकार है और 'मन्त्रे घसह्वर०' अ० [२ । ४ । ८०] सूत्र से 'च्लि' का लुक् एवं 'म्वोश्च' (८ । २ । ६५) सूत्र से मकार को नकार हो गया है। (**विश्ववेदसम्**) 'विश्ववेदाः' शब्द 'विदिभुजिभ्यां विश्वे' उ० (४ । २३८) सूत्र से 'विश्व' शब्द के उपपद रहते 'विद्' धातु से 'असि' प्रत्यय करने पर सिद्ध है। (**द्युम्नम्**) निरु० (५ । ५) में 'द्युम्न' शब्द का अर्थ अन्न और यश किया है। 'द्युम्न' शब्द 'द्युत' धातु से बनता है। (**सहः**) 'सह' शब्द निघं० (२ । ६) में बलनामों में पढ़ा है। (**आयच्छस्व**) यहां पक्ष में लट् अर्थ में लोट् लकार है। 'आङो यम हनः' (१ । ३ । २८) सूत्र से आत्मनेपद है। आङ् पूर्वक 'यम' धातु का अर्थ 'विस्तार' होता है। इस मन्त्र की व्याख्या शत० (२ । ४ । १ । ७-८) में की गई है ॥ ३ । ३८ ॥

**सपदार्थान्वयः**—हे **सम्राट्** यः सम्यग्राजते=प्रकाशते सः **अग्ने**=**जगदीश्वर** ! विज्ञानस्वरूपेश्वर ! **त्वमस्यभ्यम्** उपासकेभ्यः **द्युम्नं** प्रकाशकारकमुत्तमं यशः **सहः** उत्तमं बलं **चाभ्यायच्छस्व**=**विस्तारय** । अभिमुखं समन्ताद् विस्तारये।

एतदर्थं **वयं वसुवित्तमं** वसून्=पृथिव्यादिलोकान्वेत्ति सोऽतिशयितस्तं **विश्ववेदसं** यो विश्वंवेत्ति स विश्ववेदाः परमेश्वरः **त्वामभ्यागन्म**=**प्राप्नुयाम्** अभिमुखं समन्तात्प्राप्नुयाम । **इत्येकः** ॥

**यः सम्राट्** यः सम्य ग्राजते=प्रकाशते सः **अग्ने**=**अयमग्निः** विज्ञापको भौतिकः **अस्मभ्यं** यज्ञानुष्ठातृभ्यः **द्युम्नं** प्रकाशकारकमुत्तमं यशः **सहः** उत्तमं बलं [**अभ्यायच्छस्व**]=**अभ्यायच्छति**=**सर्वतो विस्तारयति तं वसुवित्तमं** पृथिव्यादिलोकान् वेदयति सूर्यरूपेणाग्निरेतान् प्रकाश्य प्रापयति स वसुवित्, अतिशयेन वसुविदिति वसुवित्तमो वा तं **विश्ववेदसम्**=**अग्निं** विश्वं सर्वं सुखं वेदयति=प्रापयति स भौतिकोऽग्निः (**तम्**) **वयमभ्यागन्म**=**प्राप्नुयामेति** ॥ **द्वितीयः** ॥ ३ । ३८ ॥

**भाषार्थ**—हे (**सम्राट्**) प्रकाशस्वरूप ! (**अग्ने**) तथा विज्ञानस्वरूप जगदीश्वर ! आप (**अस्मभ्यम्**) हम उपासकों के लिये (**द्युम्नम्**) प्रकाश करने वाले उत्तम यश तथा (**सहः**) उत्तम बल को (**आयच्छस्व**) विस्तृत कीजिये।

इसलिये हम लोग (**वसुवित्तमं**) वसु=पृथिवी आदि लोकों के ज्ञाता (**विश्ववेदसम्**) सम्पूर्ण ब्रह्माण्ड को जानने वाले परमेश्वर को (**अभ्यागन्म**) प्राप्त करें। यह मन्त्र का पहला अर्थ है।

जो (**सम्राट्**) प्रकाश करने वाला (**अग्ने**) यह रूप को जनाने वाला भौतिक अग्नि (**अस्मभ्यम्**) हम यज्ञानुष्ठान करने वालों को (**द्युम्नम्**) प्रकाशक उत्तम यश, (**सहः**) तथा उत्तम बल को (**अभ्यायच्छस्व**) सब ओर से विस्तृत करता है उस (**वसुवित्तमम्**) वसु=पृथिवी आदि लोकों को सूर्य रूप होकर अग्नि इनको प्रकाशित करके ग्रहण कराने वाले (**विश्ववेदसम्**) सब सुखों के प्रापक भौतिक अग्नि को हम (**अभ्यागन्म**) प्राप्त करें। यह मन्त्र का दूसरा अर्थ है ॥ ३ । ३८ ॥

[हे···**अग्ने**=**जगदीश्वर** ! त्वमस्मभ्यं **द्युम्नं सहश्चाभ्यायच्छस्व**=**विस्तारय** । यः···**अग्ने**=**अयमग्निरस्मभ्यं द्युम्नं सह** [**अभ्यायच्छस्व**]=**अभ्यायच्छति**=**सर्वतो विस्तारयति**]

**भावार्थः**—अत्र श्लेषालङ्कारः । मनुष्यैः परमेश्वरभौतिकाग्न्योर्गुणविज्ञानेन तदनुसारा-

**भावार्थ**—इस मन्त्र में श्लेष अलङ्कार है ॥ सब मनुष्य, परमेश्वर और भौतिक अग्नि के गुणों

अनुष्ठानेन सर्वतः कीर्तिबले नित्यं विस्तारणीये इति ॥ ३ । ३८ ॥

के विज्ञान को प्राप्त करके, उसके अनुसार आचरण से सब ओर कीर्ति और बल का नित्य विस्तार किया करें ॥ ३ । ३८ ॥

**भा० पदार्थः**—द्युम्नम्=कीर्तिः ॥

**भाष्यसार**—१. **अग्नि (ईश्वर)**—जगदीश्वर सम्राट् (**प्रकाशस्वरूप**) तथा विज्ञानस्वरूप है, जो उपासकों के यश और बल का विस्तार करता है। पृथिवी आदि लोकों का ज्ञाता एवं समस्त विश्व का वेत्ता है। इत्यादि ईश्वर के गुणों के ज्ञान तथा तदनुसार आचरण करने से यश और बल बढ़ता है।

२. **अग्नि (भौतिक)**—यह भौतिक अग्नि प्रकाशमय तथा अपने प्रकाश से पदार्थों का विज्ञापक है। इसमें यज्ञ करने से यह यजमानों के यश और उतम बल का विस्तार करता है। यह अग्नि सूर्य रूप में पृथिवी आदि लोकों को प्रकाशित करके ग्रहण कराता है, और सब सुखों का प्रापक है। इत्यादि भौतिक अग्नि के गुणों के ज्ञान तथा तदनुसार आचरण करने से यश और बल को बढ़ावें ॥ ३ । ३८ ॥

आसुरिः । **अग्निः=ईश्वरो भौतिकश्च** ॥ भुरिग्बृहती । मध्यमः ॥

**अथेश्वरभौतिकावग्नी उपदिश्येते ॥**

अब ईश्वर और भौतिक अग्नि का उपदेश किया जाता है ॥

**अयमुग्निर्गृहप॑तिर्गार्हपत्यः प्रजायां वसुवित्तमः । अग्नें गृहपतेऽभि द्युम्नमुभि सह ऽआयच्छस्व ॥३९॥**

**पदार्थः**—(**अयम्**) प्रत्यक्षो वक्ष्यमाणः (**अग्नि**) ईश्वरो विद्युत्सूर्यो ज्वालामयो भौतिको वा (**गृहपतिः**) गृहाणां=स्थानविशेषाणां पतिः=पालनहेतुः (**गार्हपत्यः**) गृहपतिना संयुक्तः। **अत्र गृहपतिना संयुक्ते ञ्यः ॥ अ० ४ । ४ । ६० ॥ अग्ने ञ्यः प्रत्ययः ।** इदं पदं महीधरादिभिर्व्याकरणज्ञानविरहत्वात् गृहस्य पतिः पालक इत्यशुद्धं व्याख्यातम् (**प्रजायाः**) विद्यमानायाः (**वसुवित्तमः**) यो वसूनि=द्रव्याणि वेदयति=प्रापयति सोऽतिशयितः (**अग्ने**) अयमग्निः (**गृहपते**) गृहाभिरक्षकेश्वर, गृहाणां पालयिता वा (**अभि**) अभितः (**द्युम्नम्**) सुखप्रकाशयुक्तं धनम् । **द्युम्नमिति धननामसु पठितम् ॥ निघं० २ । १० ॥** (**अभि**) अभिमुख्ये (**सहः**) उदकं बलं वा। **सह इत्युदकनामसु पठितम् ॥ निघं० १ । १२ ॥ बलनामसु च ॥ निघं० २ । ६ ॥** (**आ**) समन्तात् क्रियायोगे (**यच्छस्व**) सर्वतो देहि आयच्छति विस्तारयति वा । **अत्र पक्षे व्यत्ययः सिद्धिश्च पूर्ववत् ॥ अयं मन्त्रः शत० २ । ४ । १ । ६–११ व्याख्यातः ॥ ३६ ॥**

**प्रमाणार्थ**—(**गार्हपत्यः**) यह शब्द 'गृहपतिना संयुक्ते ञ्यः' (**अ० ४ । ४ । ६०**) सूत्र से 'गृहपति' शब्द से 'ञ्य' प्रत्यय करने पर सिद्ध होता है। (**द्युम्नम्**) 'द्युम्न' शब्द निघं० ( २ । १० ) में धन-नामों में पढ़ा है (**सहः**) 'सहस' शब्द निघं० ( १ । १२ ) में जल नामों में और निघं० ( २ । ६ ) में बल-नामों में पढ़ा है। (**आयच्छस्व**) यहां पक्ष में व्यत्यय है इसकी सिद्धि पूर्व मन्त्र में दी हुई सिद्धि के समान समझें। इस मन्त्र की व्याख्या शत० ( २ । ४ । १ । ६–११ ) में की गई है ॥ ३ । ३६ ॥

**सपदार्थान्वयः**—हे गृहपते ! गृहाभिरक्षकेश्वर ! **अग्ने=परमात्मन्** ! **योऽयं** प्रत्यक्षो वक्ष्यमाणो **भवान् गृहपतिः** गृहाणां=स्थानविशे-

**भाषार्थ**—हे (गृहपते) घर के रक्षक (**अग्ने**) परमात्मन् ! जो (**अयम्**) यह उपदिश्यमान आप (**गृहपतिः**) घरों के पालक (**गार्हपत्यः**) घर के

षाणां पतिः=पालनहेतुः **गार्हपत्यः** गृहपतिना संयुक्तः **प्रजायाः** विद्यमानायाः **वसुवित्तमः** यो वसूनि=द्रव्याणि वेदयति=प्रापयति सोऽतिशयितः **अग्निः** ईश्वरः **अस्ति**, **तस्मात्त्वमस्मदर्थं द्युम्नं** सुख-प्रकाशयुक्तं धनम् **अभ्यायच्छस्व** अभितः=सर्वतः समन्तात् देहि, **सहः** बलं **चाभ्यायच्छस्व** अभिमुख्येन सर्वतो देहि **इत्येकः** ॥

**यस्माद् गृहपतिः** गृहाणां=स्थानविशेषाणां पतिः=पालनहेतु **प्रजायाः** विद्यमानायाः **वसुवित्तमः** यो वसूनि=द्रव्याणि वेदयति=प्रापयति सोऽतिशयितः **गार्हपत्यः** गृहपतिना संयुक्तः **अयमग्निः** विद्युत् सूर्यो ज्वालामयो भौतिकः **अस्ति**, तस्मात्स [**गृहपते**] गृहाणां पालयिता [**अग्ने**] अयमग्निः **अभिद्युम्नम्** अभितः सुखप्रकाशयुक्तं धनं सह उदकं **च** [**अभ्यायच्छस्व**]=**अभ्यायच्छति=अभिमुख्येन समन्तात् विस्तारयतीति द्वितीयः** ॥ ३ । ३९ ॥

स्वामी से संयुक्त, (**प्रजायाः**) विद्यमान प्रजा के (**वसुवित्तमः**) सब द्रव्यों के प्रदाता (**अग्निः**) ईश्वर हो, इसलिये आप हमें (**द्युम्नम्**) सुख प्रकाश युक्त धन (**अभ्यायच्छस्व**) सब ओर से दीजिये (**सह**) और बल भी (**अभ्यायच्छस्व**) मुख्यतया सब ओर से प्रदान कीजिये। यह मन्त्र का पहला अर्थ है ॥

जिससे (**गृहपतिः**) घरों का पालक (**प्रजायाः**) विद्यमान प्रजा के लिये (**वसुवित्तमः**) सब द्रव्यों को प्रदान करने वाला (**गार्हपत्यः**) घर के स्वामी से संयुक्त यह (**अग्निः**) विद्युत् सूर्य वा ज्वालामय भौतिक अग्नि है, इसलिये वह [**गृहपते**] घरों का पालन करने वाला [ **अग्ने** ] अग्नि (**अभिद्युम्नम्**) सब ओर से सुख-प्रकाशयुक्त धन को (**सहश्च**) और जल को (**अभ्यायच्छस्व**) प्रधान तथा चहुँ ओर से विस्तृत करता है। यह मन्त्र का दूसरा अर्थ है ॥ ३ । ३९ ॥

[ हे···**अग्ने=परमात्मान्** ! **योऽयं भवान्···अग्निरस्ति, तस्मात्त्वमस्मदर्थं द्युम्नं···सहश्चाभ्यायच्छस्व, अयमयग्निः···अभिद्युम्नं सहश्च [अभ्यायच्छस्व]=अभ्यायच्छति** ]

**भावार्थः**—अत्र श्लेषालङ्कारः ॥ गृहस्थैर्य-देश्वरमुपास्यैतस्याज्ञायां वर्त्तित्वायमग्निः कार्य-सिद्धये संयोज्यते तदानेकविधे धनबले अत्यन्तं विस्तारयति ।

**भावार्थ**—इस मन्त्र में श्लेष अलङ्कार है ॥ गृहस्थ लोग जब ईश्वर की उपासना और इसकी आज्ञा में रहकर इस अग्नि को कार्यसिद्धि के लिये संयुक्त करते हैं तब अनेक प्रकार के धन और बल को यह अग्नि विस्तृत करता है।

[ **प्रजाया वसुवित्तमः ···अयमग्निरस्ति** ]

कुतः ? प्रजाया मध्येऽस्याग्नेः पदार्थप्राप्तये साधकतमत्वादिति ॥ ३ । ३९ ॥

क्योंकि—प्रजा के मध्य में यह अग्नि पदार्थों की प्राप्ति के लिये सब से बड़ा साधक (**करण**) है ॥ ३ । ३९ ॥

**भा० पदार्थः**—वसुवित्तमः=पदार्थप्राप्तये साधकतमः ॥

**भाष्यसार**—१. **अग्नि** (**ईश्वर**)—यह अग्नि अर्थात् परमातमा घरों का रक्षक, गृहपतियों के साथ संयुक्त रहने वाला, प्रजा को सब द्रव्य प्राप्त कराने वाला है। जो हमें सुखदायक धन और बल भी सब ओर से देता है। किन्तु इसके लिये ईश्वर की उपासना और उसकी आज्ञा का पालन आवश्यक है ॥

२. **अग्नि** (**भौतिक**)—यह भौतिक अग्नि घरों की रक्षा का हेतु है तथा प्रजा में द्रव्यों की प्राप्ति के लिये सब से बड़ा साधन है। यह गृहपतियों के साथ सदा संयुक्त रहने वाला है। यह विद्युत्, सूर्य और ज्वाला रूप है। यह सुखदायक धन और जल का भी विस्तारक है ॥ ३ । ३९ ॥

आसुरिः । **अग्निः**=भौतिकः ॥ निचृदनुष्टुप् । गान्धारः ॥

**पुनर्भौतिकोग्निः कीदृश इत्युपदिश्यते ॥**

फिर भौतिक अग्नि कैसा है, इस विषय का उपदेश किया जाता है ॥

**अयमग्निः पुरीष्यो रयिमान् पुष्टिवर्द्धनः । अग्ने पुरीष्याभि द्युम्नमभि सहऽआयच्छस्व ॥ ४० ॥**

**पदार्थः**—(**अयम्**) वक्ष्यमाणलक्षणः (**अग्निः**) पूर्वोक्तो भौतिकः (**पुरीष्यः**) ये पृणन्ति यानि कर्माणि तानि पुरीषाणि तेषु साधुः (**रयिमान्**) प्रशस्ता रययो=धनानि विद्यन्ते यस्मिन् सः । **अत्र प्रशंसार्थे मतुप् । रयिरिति धननामसु पठितम् ॥ निघं० २ । १० ॥** (**पुष्टिवर्द्धनः**) वर्द्धयतीति वर्द्धनः, पुष्टेर्वर्द्धनः पुष्टिवर्द्धनः (**अग्ने**) सर्वोत्तमपदार्थप्रापकेश्वर ! (**पुरीष्य**) पृणन्ति=पूरयन्ति सुखानि यैर्गुणैस्ते पुरीषास्तेषु साधुस्तत्सम्बुद्धौ (**अभि**) अभितः (**द्युम्नम्**) विज्ञानसाधकम् (**अभि**) आभिमुख्ये (**सः**) शरीरात्मबलम् (**आ**) समन्तात् क्रियायोगे (**यच्छस्व**) विस्तारय । **अस्य सिद्धिः पूर्ववत् ॥ ४० ॥**

**प्रमाणार्थ**—(**रयिमान्**) यहाँ प्रशंसा अर्थ में 'मतुप्' प्रत्यय है । 'रयि' शब्द निघं० (२ । १०) में धन-नामों में पढ़ा है । (**आयच्छस्व**) इस पद की सिद्धि पूर्व-मन्त्र के समान है ॥ ३ । ४० ॥

**अन्वयः**—हे **पुरीष्य**! पृणन्ति =पूरयन्ति सुखानि यैर्गुणैस्ते पुरीषास्तेषु साधुस्तत्सम्बुद्धौ **अग्ने**=**विद्वन्**! सर्वोत्तमपदार्थप्रापकेश्वर ! **त्वं योऽयं** वक्ष्यमाण लक्षणः **पुरीष्यः** ये पृणन्ति यानि कर्माणि तानि पुरीषाणि, तेषु साधुः **रयिमान्** प्रशस्ता रययो=धनानि विद्यन्ते यस्मिन् सः **पुष्टिवर्द्धनः** वर्द्धयतीति वर्द्धनः, पुष्टेर्वर्द्धनः पुष्टिवर्द्धनः **अग्निः** पूर्वोक्तो भौतिकः **अस्ति, तस्मादभिद्युम्नम्** अभितो विज्ञानसाधकं **अभिसहः** अभिमुख्येन शरीरात्मबलं वा **अभ्यायच्छस्व**= **विस्तारय** (अभितः समन्ताद् विस्तारय) ॥ ३ । ४० ॥

**भाषार्थ**—हे (**पुरीष्य**) सुख से भरपूर गुणों में श्रेष्ठ (**अग्ने**) विद्वन् ! एवं सब उत्तम पदार्थों के प्रदाता ईश्वर ! जो (**अयम्**) यह उपदिश्यमान (**पुरीष्यः**) तृप्त करने वाले गुणों में उत्तम (**रयिमान्**) प्रशस्त धनों से युक्त (**पुष्टिवर्द्धनः**) पुष्टि को बढ़ाने वाला (**अग्निः**) पूर्वोक्त भौतिक अग्नि है, उससे (**अभिद्युम्नम्**) सब ओर से विज्ञान को तथा (**अभिसहः**) मुख्यतया शारीरिक और आत्मिक बल को (**अभि-आ-यच्छस्व**) सब ओर से विस्तार करो ॥ ३ । ४० ॥

[ हे···अग्ने=विद्वंस्त्वं योऽयं···अग्निरस्ति, तस्मादभिद्युम्नमभिसहवायच्छस्व ]

**भावार्थः**—मनुष्यैः परमेश्वरानुग्रहस्वपुरुषार्थाभ्यामग्निविद्यां प्राप्यानेकविधं धनं बलं च सर्वतो विस्तारणीयमिति ॥ ३ । ४० ॥

**भावार्थ**—सब मनुष्य, परमेश्वर के अनुग्रह और अपने पुरुषार्थ से अग्निविद्या को प्राप्त करके नाना प्रकार के धन और बल का चहुँ ओर विस्तार करें ॥ ३ । ४० ॥

**भाष्यसार**—१. **अग्नि** (**ईश्वर**)—अग्नि अर्थात् ईश्वर पूर्ण विद्वान् है, यह सुख से भरपूर करने वाले गुणों से युक्त जनों में भी सब से श्रेष्ठ है, तथा सर्वोत्तम पदार्थों का प्रापक है। विज्ञान के साधक शारीरिक और आत्मिक बल का दाता है। किन्तु इसमें परमेश्वर का अनुग्रह आवश्यक है ॥

२. **अग्नि** (**भौतिक**)—यह भौतिक अग्नि तृप्त करने वाले कर्मों का साधक, प्रशस्त धनों का

निवास स्थान तथा पुष्टि को बढ़ाने वाला है। ईश्वर के अनुग्रह और अपने पुरुषार्थ से इस अग्नि विद्या को जान कर नाना प्रकार के धन और बल को प्राप्त किया जा सकता है ॥ ३ । ४० ॥

आसुरिः । **वास्तुरग्निः**=**गृहाश्रम** । आर्षी पंक्तिः । पञ्चमः ॥

**अथ गृहाश्रमानुष्ठानमुपदिश्यते ॥**

अब गृहस्थाश्रम के अनुष्ठान का उपदेश किया जाता है ॥

गृहा मा बिभीत मा वेपध्वमूर्ज्जं बिभ्रत ऽ एमसि ।
ऊर्ज्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ॥ ४१ ॥

**पदार्थः**—(**गृहाः**) गृह्णन्ति ब्रह्मचर्याश्रमानन्तरं गृहाश्रमं ये मनुष्यास्तत्सम्बुद्धौ (**मा**) निषेधार्थे (**बिभीत**) भयं कुरुत (**मा**) प्रतिषेधे (**वेपध्वम्**) कम्पध्वम् (**ऊर्जम्**) पराक्रमम् (**बिभ्रतः**) धारयन्तः (**आ**) समन्तात् (**इमसि**) प्राप्नुमः । **अत्रेदन्तो मसीतीदादेशः** (**ऊर्जम्**) अनेकविधं बलम् (**बिभ्रत्**) धारयन् (**वः**) युष्मान् (**सुमनाः**) शोभनं मनो=विज्ञानं यस्य सः (**सुमेधाः**) सुष्ठु मेधा=धारणावती सङ्गमिका धीर्यस्य सः (**गृहान्**) गृहाश्रमस्थान् विदुषः (**आ**) समन्तात् (**एमि**) प्राप्नुयाम् । **अत्र लिङर्थे लट्** (**मनसा**) विज्ञानेन (**मोदमानः**) हर्षोत्साहयुक्तः ॥ **एतदादिमन्त्रत्रयम् शत० २ । ४ । १ । १४ व्याख्यातम् ॥ ४१ ॥**

**प्रमाणार्थ**—(**एमसि**) यहाँ 'इदन्तो मसि' [**अ०** ७ । १ । ४६] सूत्र से इकार आदेश है। (**एमि**) प्राप्नुयाम् । यहाँ लिङ्—अर्थ में लट् लकार है। मन्त्र—४१, ४२ और ४३ की व्याख्या शत० (२ । ४ । १ । १४) में की गई है । ३ । ४१ ॥

**सपदार्थान्वयः**—हे **ब्रह्मचर्येण कृतविद्या गृहाश्रमिणो मनुष्या ! ऊर्ज्जं** पराक्रमं **बिभ्रतः** धारयन्तः **गृहाः** ! गृह्णन्ति ब्रह्मचर्याश्रमानन्तरं गृहाश्रमं ये मनुष्यास्तत् सम्बुद्धौ ! **यूयं गृहाश्रमं प्राप्नुत ! तदनुष्ठानान्मा बिभीत** भयं मा कुरुत, **मा वेपध्वं** मा कम्पध्वम् ।

**ऊर्जम्** पराक्रमं **बिभ्रतः** धारयन्तः **वयं** [**वः**]= **युष्मान् गृहान्** गृहाश्रमस्थान् विदुषः **एमसि**= **समन्तात्प्राप्नुमः** ।

**वः**=**युष्माकं मध्ये स्थित्वैवं गृहाश्रमे वर्त्तमानः सुमनाः** शोभनं मनोविज्ञानं यस्य सः **सुमेधाः** सुष्ठु मेधा धारणवती सङ्गमिका धीर्यस्य सः **मनसा** विज्ञानेन **मोदमानः** हर्षोत्साहयुक्तः **ऊर्जम्** अनेकविधं बलम् **बिभ्रत्** धारयन् **सन्नहं** सुखानि=**आ-एमि**= **नित्यं प्राप्नुयाम्** । समन्तात् प्राप्नुयाम् ॥ ३ । ४१ ॥

**भावार्थ**—हे ब्रह्मचर्य से विद्या को प्राप्त हुए गृहाश्रमी जनो ! (**ऊर्जम्**) पराक्रम का (**बिभ्रतः**) धारण करते हुए (**गृहाः** !) ब्रह्मचर्याश्रम के पश्चात् गृहाश्रम को ग्रहण करने वालो ! तुम गृहाश्रम को प्राप्त करो । गृहाश्रम के अनुष्ठान से (**मा बिभीत**) मत डरो और (**मा वेपध्वम्**) मत काँपो ।

(**ऊर्जम्**) पराक्रम को (**बिभ्रतः**) धारण करते हुए हम लोग (**वः**) तुम (**गृहान्**) गृहाश्रमी विद्वानों को (**एमसि**)=चहुँ ओर से प्राप्त होते हैं ।

(**वः**) तुम्हारे मध्य में रह कर इस प्रकार गृहाश्रम में रहता हुआ (**सुमनाः**) उत्तम विज्ञान वाला, (**सुमेधाः**) श्रेष्ठ धारणावती ज्ञान से सङ्गम (**मेल**) कराने वाली बुद्धि वाला (**मोदमानः**) हर्ष उत्साह से युक्त (**ऊर्जम्**) नाना प्रकार के बल को (**बिभ्रत्**) धारण करता हुआ मैं सुखों को (**आ-एमि**) चहुँ ओर से सदा प्राप्त करूँ ॥ ३ । ४१ ॥

**[हे ब्रह्मचर्येण कृतविद्या गृहाश्रमिणो मनुष्या ! ऊर्ज्जं बिभ्रतो गृहाः ! यूयं गृहाश्रमं प्राप्नुत]**

**भावार्थ:**—मनुष्यैः पूर्णब्रह्मचर्याश्रमं संसेव्य युवावस्थायां स्वयंवरविधानेन स्वतुल्य स्वभाव विद्यारूपबलवतीं सुपरीक्षितां स्त्रीमुद्वाह्य शरीरात्मबलं संपाद्य सन्तानोत्पत्तिं विधाय सर्वैः साधनैः सद्व्यवहारेषु स्थातव्यम् ।

**भावार्थ**—सब मनुष्य, पूर्ण ब्रह्मचर्य आश्रम का सेवन करके, युवा अवस्था में स्वयंवर कर, अपने तुल्य स्वभाव, विद्या, रूप और बल वाली, सुपरीक्षित स्त्री से विवाह कर, शरीर और आत्मा के बल को सिद्ध कर, सन्तानोत्पत्ति करके, सब साधनों से श्रेष्ठ व्यवहारों में स्थिर रहें ।

**[ तदनुष्ठानान्मा बिभीत, मा वेपध्वं च ]**

नैव केनापि गृहाश्रमानुष्ठा नात् कदाचिद् भेतव्यं कम्पनीयं च । कुतः ? सर्वेषां सद्व्यवहाराणामाश्रमाणां च गृहाश्रमो मूलमस्त्यत एष सम्यगनुष्ठातव्यः । नैतेन विना मनुष्य वृद्धो राज्य सिद्धश्चजायते ॥ ३ । ४१ ॥

गृहाश्रम से किसी को कभी भी नहीं डरना चाहिए और न काँपना चाहिए । क्योंकि—सब श्रेष्ठ व्यवहारों और आश्रमों का गृहाश्रम मूल है, इसलिये इसका उत्तम रीति से अनुष्ठान करें । इसके बिना मनुष्य वृद्धि और राज्य सिद्धि नहीं हो सकती ॥ ३ । ४१ ॥

**अन्यत्र व्याख्यात**—महर्षि ने इस मन्त्र की व्याख्या संस्कारविधि (**गृहाश्रमप्रकरण**) में इस प्रकार की है:—

"हे (**गृहाः**) गृहस्थ लोगो ! तुम विधिपूर्वक गृहाश्रम में प्रवेश करने से (**मा, बिभीत**) मत डरो (**मा, वेपध्वम्**) मत कंपायमान होओ (**ऊर्ज्जम्**) अन्न, पराक्रम तथा विद्यादि शुभ गुण से युक्त होकर गृहाश्रम को (**बिभ्रतः**) धारण करते हुए तुम लोगों को हम सत्योपदेशक विद्वान् लोग (**एमसि**) प्राप्त होते और सत्योपदेश करते हैं और अन्न, पानाच्छादन स्थान से तुम्हीं हमारा निर्वाह करते हो इसलिए तुम्हारा गृहाश्रम व्यवहार में निवास सर्वोत्कृष्ट है । हे वरानने ! जैसे मैं तेरा पति (**मनसा**) अन्तःकरण से (**मोदमानः**) आनन्दित (**सुमनाः**) प्रसन्न मन (**सुमेधाः**) उत्तम बुद्धि से युक्त मुझको और हे मेरे पूजनीयतम पिता आदि लोगो ! (**वः**) तुम्हारे लिये (**ऊर्ज्जम्**) पराक्रम तथा अन्नादि ऐश्वर्य को (**बिभ्रत्**) धारण करता हुआ तुम (**गृहान्**) गृहस्थों को (**आ, एमि**) सब प्रकार से प्राप्त होता हूँ उसी प्रकार तुम लोग भी मुझसे प्रसन्न हो के वार्ता करो" ॥ ३ ॥

महर्षि ने इस मन्त्र की व्याख्या ऋग्वेदादिभाष्य-भूमिका (**गृहाश्रमविषय**) में इस प्रकार की है :—

"(**गृहा मा बिभीत०**) हे गृहाश्रम की इच्छा करने वाले मनुष्य लोगो ! तुम लोग स्वयंवर अर्थात् अपनी इच्छा के अनुकूल विवाह करके गृहाश्रम को प्राप्त हो और उससे डरो वा कंपो मत । किन्तु उससे बल पराक्रम करने वाले पदार्थों को प्राप्त होने की इच्छा करो तथा गृहाश्रमी पुरुषों से ऐसा कहो कि मैं परमात्मा की कृपा से आप लोगों के बीच पराक्रम, शुद्ध मन, उत्तम बुद्धि और आनन्द को प्राप्त हो कर गृहाश्रम करूँ ॥ ११ ॥

**भाष्यसार**—**गृहाश्रम का अनुष्ठान**—पूर्ण ब्रह्मचर्य आश्रम का सेवन करके युवा अवस्था में अपने तुल्य स्वभाव, विद्या, रूप और बल वाली, उत्तम रीति से परीक्षा की हुई स्त्री से स्वयंवर विवाह करें । सन्तानोत्पत्ति से पूर्व शारीरिक और आत्मिक बल को धारण करें । गृहाश्रम के अनुष्ठान से कभी डरें नहीं । क्योंकि सब श्रेष्ठ व्यवहारों का और सब आश्रमों का गृहाश्रम ही मूल है ।

